# भारतजनताहम्

संगणकयन्त्र–
जालोऽपि
मेऽस्तु
भौतिक्युन्नतिरपि
मे तथास्तु ।
जीवनरसश्च मा शुष्को भूदितिकामा भारतजनताहम् ।।
जिह्वां मे कीलयितुं शक्तः कः कोऽत्र
जगति मातुर्जातः । वाणी विहरति मे
सदोज्ज्वला गर्जन्ती भारतजनताहम् ।।
अभितः परितः समया निकषा
मां यद् घटते तत्प्रेक्षेऽहम् ।
सर्वस्य कृते खलु सज्जा
यासावहिता
भारत–
जनताहम् ।।

## रमाकान्त शुक्लः

रमाकान्त शुक्लः सुकुमारमार्गस्य कविरिति निर्विवादमेव । अनेन मार्गेणासौ वीररसं गन्तव्यं सम्पादयतीति तावच्चित्रम्। तत्रापि चित्रीये यदेष कविः गेयतांभित्तौ स्थायिभावचित्रमुद्रेखयति। कवित्वं चास्य पाठ्यत्वमपेक्ष्य गेयत्वं पुरस्करोति। गानेन चासौ सभ्यांश्चित्रार्पितारम्भान् विधत्ते।

शैली नाम रचयितुः शीलेन सम्बध्यत इत्यपि विचारणीयम्। शीलं व्यक्तेराध्यात्मिकं वान्तरिकं वा स्वरूपम्। रमाकान्तो यथा नामाक्लिष्टवचनः, अक्लिष्टरचनश्च, तथैव तस्य शैली। प्रकृत्या विनोदशीलः सन्नपि नाभिजात्यं जहाति, तथैवास्य कवितापि। यथा खल्वयं पुष्ट-तुष्ट-कलेवरस्तथास्य काव्यपुरुषोऽपि।

श्रीरमाकान्तशुक्लेन देववाण्याः का सपर्या कृतेति तावद् विचार्यते। उच्चस्तरीयं बालसाहित्यं प्रायेणभावग्रस्तम्। रमाकान्तस्य प्रत्येकं कविताः सुगेयत्वेन सुपठत्वेन सुबोधत्वेन च बालानां कृते सर्वथोपादेयतां भजतीति संशीतिलेशेनापि रहितं चकास्ति। 'भाति मे भारतम्' इति तं सर्वथा राष्ट्रमहिमानं प्रकाशयति। तादृशी सरला रचना यदि नालभ्या तर्हि दुर्लभा त्वस्त्येव। एवंप्रकृतिकानां कवितानां राष्ट्रगौरवाङ्कितानां रचयिता नूनं धन्यः। अपि च 'भारतजनताऽहम्' इति रचना यमात्माभिमानं प्रवर्तयति तत्कृते श्लाघनीयो नितरां श्रीशुक्लः।

—अवस्थी डॉ० बच्चूलालो ज्ञानोपाह्वः
(देववाणी-सुवासतः)

भारतजनताहम् (संस्कृतकवितासङ्कलनम्)

प्रणेता : डा० रमाकान्त शुक्लः

प्रकाशकः : देववाणी–परिषद्, दिल्ली
आर–६, वाणी विहारः,
नयी दिल्ली–११००५९ (भारतम्)
दूरभाषः ५६३९१४६

मुद्रकः : प्रवीण प्रिंटिंग सर्विस
३५, टी एक्सटैंशन, उत्तम नगर,
नई दिल्ली–११००५९ फोन : ५३३२७५५

संस्करणम् : प्रथमम्, २००१ ई०

मूल्यम् : रु० ६९.००

नवदिल्लीस्थराष्ट्रियसंस्कृतसंस्थानस्य वित्तीयसहयोगेन प्रकाशितम्





Published with the financial assistance from the Rashtriya Sanskrit Sansthan, New Delhi

**BHĀRATAJANATĀHAM ( Sanskrit Poetry)**

*Author* : Shukla Dr. Rama Kant

*Publisher* : Devavani Parishad, Delhi
R-6, Vani Vihar, New Delhi-110059 (India)
Phone : 5639146

*Printer* : Parveen Printing Service
35, T, Extn., Uttam Nagar,
New Delhi-110059 Ph. : 5332755

*Edition* : First, 2001

*Price* : Rs. 69.00

# प्रथमसंस्करणस्य प्रास्ताविकम्



**'भाति मे भारतं' (१९८०), 'जय भारतभूमे' (१९८१)**-इति काव्यद्वये मया भारतस्य सद्गुणाः कीर्तिताः । तदनन्तरम् **'अहं स्वतन्त्रता भणामी'**त्यस्यां रचनायां स्वतन्त्रतामुखेन मया भारतस्य चिन्त्यदशा वर्णिता। तदनु **'भारतजनताहम्'**-इत्यनया रचनया मया भारतीयजनताया वैशिष्ट्य-मुद्घाटितम् । अस्य काव्यसंकलनस्येयं प्रमुखा रचनास्ति, अतएव शीर्षकं **'भारतजनताहम्'**इत्येव निर्धारितम् । इयं रचना इतः पूर्वम् **'अर्वाचीनसंस्कृते'** ८/३ **'दूर्वायां'** च संक्षेपतः प्रकाशिताभूत्। अत्र प्रकाशितायामस्यां कवितायां पद्यानां क्रमो मनाक् परिवर्तितः । १९९२ तमे खैष्टेऽब्दे कतिपयान्यन्यान्यपि पद्यान्यत्र संयोजितानि। इदानीमयमेव क्रमो मेऽभिमतः।

अत्र संकलितासु रचनासु सर्वपुरातनी अस्ति- **'नमः शास्त्रिणे वीरधुर्याय तस्मै'**इति या मया २.१०.१९६५ तमे वर्षे प्रणीता। नूत्नतमा च रचना **'भारतस्य जनता समीक्षते'**इत्यस्ति। संकलनं मङ्गलादि कर्तुं मङ्गलात्मिका रचनाः पूर्वं स्थापिताः । तदनु कालक्रमानुसारं रचनाः संयोजिताः । भारतस्य जनता यथा वीरान् नमति, यथा च महापुरुषान् स्मरति, यथा च स्वदेशस्य प्रगतिं, सुरक्षां, सुखं, गरिमाणं निर्भीकतां चेच्छति, यथा च लोकतन्त्रं रिरक्षति, यथा च लोकतन्त्रप्रतारकान् नेतृब्रुवानधिक्षिपति, यथा च विदुषोऽभिनन्दति, यथा च परमात्मानं स्तौति, यथा च विश्वबन्धुत्वभावनायाः प्रसारमभिलषति, यथा च स्वराष्ट्रस्य महिम्नो वृद्धिं, विश्वशान्तेः सिद्धिं मानवतायाः सुखोपलब्धिं च प्रतीक्षते यथा चान्यत् किमप्याचरितुमीहते, तथैवैतासु रचनासु साक्षात्कर्तुं शक्यते।

एताः कविता मया दिल्लीस्थ-देववाणी-परिषदा, उज्जयिनीस्थ-कालिदाससमित्या कालिदास अकादम्या च, साहित्य अकादम्या, दिल्ली संस्कृत अकादम्या, मध्यप्रदेश संस्कृत-अकादम्या, राजस्थान संस्कृत-अकादम्या, राष्ट्रिसंस्कृतसंस्थानेन, विश्वसंस्कृतसम्मेलनेन, दिल्ली-सागर-लालबहादुरशास्त्री राष्ट्रियसंस्कृतविद्यापीठ गुरुकुलकाँगडी-नागपुर आगरा अलीगढ़ अवधेशप्रताप पुणे-कुरुक्षेत्र-जम्मू-मेरठ-रुहेलखण्ड-जगन्नाथ संस्कृत-सम्पूर्णानन्दसंस्कृत-जबलपुर-कानपुर-इलाहाबाद-प्रभृतिविश्वविद्यालयैः, मैनपुरीस्थसुरभारती सेवासंस्थानेन, अनेकैर्महाविद्यालयैर्विद्यालयैर्गुरुकुलैः, देशविदेशस्थिताभिरनेक साहित्यिक-सांस्कृतिकसंस्थाभिश्च समायोजितेषु संस्कृतकविसम्मेलनेषु, आकाशवाण्या समायोजिते सर्वभाषाकविसम्मेलने, दूरदर्शनेन प्रसारितेषु कार्यक्रमेषु

च पठिता:। भारतीयजनताया: स्नेहातिरेक एताभी रचनाभि: सम्प्राप्त:। अहं 
सर्वेषां श्रोतृणामाभारमावहामि।

**'भारतजनताहम्'** इतीमां रचनामवलम्ब्यैक: कार्यक्रमो दिल्लीदूरदर्शनाद् बहुधा प्रसारितोऽभूत्। **'स्वागतं पयोद ते'** इतीमां गीतिमवलम्ब्याप्येक: कार्यक्रमो दिल्लीदूरदर्शनात् राष्ट्रियसरण्यां प्रासारितोऽभूत्। भारतीयज्ञानपीठेन **'अहं स्वतन्त्रता भणामि'**, **'भारतजनताहम्'**, **'एकं सद् बहुधा विलोक्यते भारतम्'** इत्यासां रचनानामनुवादा: **'भारतीय कविता'**-नामकेषु ग्रन्थेषु प्रकाशिता:। मच्छिष्यया (इदानीं स्वर्गतया) डा० रमा झा-महाभागया **'सुरभारती विजयते'**, **'भारतजनताहम्'**-इत्यनयो:, डा० एस०पी० दीक्षितमहाभागेन च **'अहं स्वतन्त्रता भणामी'**त्यस्या रचनाया आंग्लरूपान्तरं कृतम्। २५-१-१९८७ तमे दिनांके आकाशवाण्या: सर्वभाषाकविसम्मेलने सर्वासु संविधानस्वीकृतासु भाषासु **'अहं स्वतन्त्रता भणामि'**इत्यस्या: रचनाया: काव्यानुवादा: प्रसारिता जाता: येषु डॉ० कृष्णमुरारिशर्मकृतोऽनुवाद: १९८७ तमे वर्षे **'अर्वाचीनसंस्कृते'** प्रकाशित:। म०प्र० संस्कृत अकादम्या ३०-८-१९९२ तारिकायां भोपालनगरे भारत-भवने **'शब्दमन्दाकिनी'**-नामा कार्यक्रम: समायोजित: यत्र मया **'भारतजनताहम्'**इतीयं रचना वृत्तानुवृत्तहिन्द्यनुवादसहिता प्रस्तुता । परिशिष्टे एते काव्यानुवादा: साभारं प्रकाश्यन्ते। संकलनस्य अनुक्रमे कवितान्ते च रचनातिथेरप्युल्लेखो मयाकारि। एतेन रचनाकाले कीदृशी देशदशा विश्वदशा वासीदिति ज्ञानं सुकरं स्यात्। एतासु रचनासु युगस्य कियत् प्रतिफलनमस्ति युगाय कतमो वा सन्देशो दीयते इत्यत्र विद्वांस एव प्रमाणम्। बहो: कालाद् **'भारतजनताहम्'** इत्यस्य प्रकाशनं प्रतीक्षितमासीत्। **'देववाणी-परिषद्, दिल्ली'**तिसंस्थाया माध्यमेनास्य कवितासंकलनस्य ९१ तमग्रन्थरूपेण प्रकाशनं भवति तदर्थं परिषदं प्रति कृतज्ञोऽस्मि। अस्य संकलनस्य प्रकाशनेन, मन्ये, ते सर्वेऽपि सहृदयास्तोषमेष्यन्ति ये इमा: कविता: पठनाय ग्रहीतुकामा आसन् । मुद्रणगतदोषाणां निरासार्थं शुद्धिपत्रं दीयते । पाठकास्तत्प्रयोक्तुं सादरमभ्यर्थ्यन्ते।

कृतिमिमां भारत-जनतायै, यत्र मम जन्मवंश:, विद्यावंश:, सम्बन्धिन:, मित्राणि, कविबन्धव:, समीक्षका:, सहृदया: श्रोतार: पाठकाश्चापि अन्तर्भवन्ति, सादरं समर्पयामि।

**'रमालय:'** आर ६ वाणी-विहार:
नई दिल्ली-११००५९
दि० २४.१२.२००१ ई०

विद्वज्जनचरणकमलचञ्चरीक:
(रमाकान्त शुक्ल:)

# शुद्धिपत्रम्

(यत्र पद्यसंख्या नास्ति तत्र पृष्ठस्यैव पंक्तिर्गणनीया)

| पृष्ठे | पद्ये | पंक्तौ | अशुद्धं | शुद्धम् |
|---|---|---|---|---|
| 7 | – | 11 | मतगेंश्वर | मतंगेश्वर |
| 16 | 11 | 1 | मलङ्गनाथं | मङ्गलनाथं |
| 18 | 5 | 2 | गिरधर | गिरिधर |
| 18 | 6 | 1 | गोट्यवृति | गोटावृत |
| 41 | 42–43 | पद्ययोर्मध्ये इदं पद्यं योजनीयम् | | |

आक्रमिणो लुण्ठक-संघाता
आगता येऽपि मयि गता लयम् ।
विविधाप्येका विलसामि सदा
बहुवर्णा भारतजनताहम् ॥

42 — 50 तमपद्यानन्तरम् इदं पद्यद्वयं योजनीयम्

रथ-रमाकान्त-राजेन्द्रमिश्र-
कवितालहरीः पायं पायम् ।
विस्मरति सुधाधारामपि या
रसिका सा भारतजनताहम् ॥
यत्कथितमस्ति तत्सत्यमस्ति
अपि कश्चित्तन्मिथ्याकरोति ?
श्रद्धेयं वचनं व्याहरामि
प्रामाणिकभारतजनताहम् ॥

| पृष्ठे | पद्ये | पंक्तौ | अशुद्धं | शुद्धम् |
|---|---|---|---|---|
| 43 | 3 | 3 | पत्रपाठेषु | यत्र पत्रेषु |
| 65 | 4 | 1 | चेतस्तु | चेतस्सु |
| 75 | 5 | 2 | हन्त ! वदत | हन्त ! |
| 76 | 10 | 2 | मनक् | मनाक् |
| 76 | 14 | 1 | शासथ | शासथ' |
| 82 | 21 | 1 | मे | ते |
| 101 | 1 | 3 | तत्रायो | तत्राप यो |

| पृष्ठे | पद्ये | पंक्तौ | अशुद्धं | शुद्धम् |
|---|---|---|---|---|
| 101 | 2 | 4 | तस्य | स्तस्य |
| 101 | 3 | 4 | तस्य | स्तस्य |
| 110 | 30 | 1 | कथा | कथं |
| 120 | 2 | 2 | जेताश्च | जेतारश्च |
| 120 | 1. पादटिप्पण्यां | | भारतीय: | भारतीया: |
| 150 | 115 | 2 | तच्चात्र | तच्चात्र* |
| 160 | – | 10 | मुग्धाो | मुग्धो |
| 163 | 1 | 1 | वस्तरे | वत्सरे |
| 164 | 11 | 2 | मयात्र हि | मयाधुना |
| 164 | 13 | 2 | स्यु'दुष्कृत: | स्युर्दुष्कृत: |
| 165 | 1 | 2 | भारतस्य | भारत– |
| 165 | 1 | 3 | यथ | मथ |
| 165 | 2 | | को न वञ्चति जनान् मतप्रदान् | वञ्चयन्ति मतदायकान्न के |
| 167 | 20 | 4 | परीक्षते | प्रतीक्षते |
| 167 | 23 | 1 | भारतभू . | भरतभू |
| 177 | – | 8 | प्रवचना | प्रवंचना |
| 177 | – | 14 | शीःघ्र | शीघ्र |
| 185 | – | 21 | Sciene | Science |
| 191 | 22 | 2 | से | ये |
| 195 | 47 | 2 | मैं अपनी अपनी से | बातें मैं अपनी |
| 196 | 50 | 2 | समझते सब सत्य | तथ्य बताती हूँ |

196 51–52 पद्ययोर्मध्ये इदं पद्यं योजनीयम्

रथ–रमाकान्त–राजेन्द्रमिश्र
की कविता लहरी को पी कर ।
जो अमृतपान को गिने न कुछ
वो रसिका भारत जनता मैं ।।

| | पंक्तौ | अशुद्धं | शुद्धम् |
|---|---|---|---|
| आवरणपृष्ठे (1) | 18 | प्रायेण | प्रायेणा |
| आवरणपृष्ठे (3) | 26 | दूरदर्शनयो | दूरदर्शनयो: |

# भारतजनताहम् : अनुक्रमः

# वाणीं वयं वन्दामहे !

कुन्देन्दुहिमधवलां धवलवस्त्रावृतां हंसस्थितां
वरकच्छपीझङ्कृतिपरां ब्रह्मेशनारायणनुताम् ।
मालाधरां पुस्तकधरां निःशेषजाड्यविलोपिनीम्
अक्षय्यविद्याविभवदां वाणीं वयं वन्दामहे ॥१॥

यस्याः स्मरणमात्रेण पुम्भिर्लभ्यते ज्ञानप्रभा
यस्याः कृपालवलेशतः सुलभा शुभा वाचो विभा ।
शब्दार्थगुणवृत्तिप्रदां रीतिप्रदां रसदायिनीम्
ध्वन्यौचितीवक्रोक्तिदां वाणीं वयं वन्दामहे ॥२॥

प्रतिभाप्रदां व्युत्पत्तिदामभ्यासदां रचनात्मिकाम्
गद्यात्मिकां पद्यात्मिकां स्वरताललयतानात्मिकाम् ।
श्रव्यात्मिकां दृश्यात्मिकां कविसहृदयाख्याधारिणीम्
वागात्मिकां नादात्मिकां वाणीं वयं वन्दामहे ॥३॥

निगमागमाकृतिधारिणीं सच्छास्त्रचिन्तनरूपिणीम्
विज्ञान-दर्शन-साहिती-भाषा-विभाषा-रूपिणीम् ।
शिक्षा-निरुक्त-व्याकरण-कल्पात्मिकां लिपिरूपिणीं
छन्दोमयीं ज्येतिर्मयीं वाणीं वयं वन्दामहे ॥४॥

विश्वं समस्तं मूकवज्जायेत यत्कृपया विना
भुवनं भवेदन्धं तथा यस्या दयालोकं विना ।
दूरेऽन्तिके वा तिष्ठतां तां योजयित्रीं प्राणिनां
लोकावलम्बनरूपिणीं वाणीं वयं वन्दामहे ॥५॥

यास्ते परा पश्यन्तिका या मध्यमा या वैखरी
सृष्टिस्थितिप्रलयेश्वरी सुयशस्करी मंगलकरी ।
तमसो जनान् ज्योतिर्नयति या, तां विधातुर्गेहिनीं
शुक्लां सुमतिदां मातरं वाणीं वयं वन्दामहे ॥६॥

(रचनातिथिः १४-९-१९९४)

# सुरभारती विजयते

निगमागमैरुपेता विज्ञानरत्नरम्या ।
वेदाङ्गपूतकाया सुरभारती विजयते ॥

जयदेवशुभ्रगीतिः कविकालिदासकीर्तिः ।
सौमिल्लभासहासा सुरभारती विजयते ॥

तत्त्वं विचारयन्ती ज्ञानं प्रचारयन्ती ।
चित्तं विकाशयन्ती सुरभारती विजयते ॥

लोकं प्रबोधयन्ती शोकं विदारयन्ती ।
चिन्तां विनाशयन्ती सुरभारती विजयते ॥

'विद्या ददाति विनयं' 'सत्यं सदा विजयते' ।
इत्यादि कीर्तयन्ती सुरभारती विजयते ॥

अज्ञैर्मृतेति गदिता ह्यमरत्वभावभरिता ।
नित्यं प्रवर्धमाना सुरभारती विजयते ॥

गीतासुघोषदात्री लालित्यभावधात्री ।
नित्यं च सर्वशुक्ला सुरभारती विजयते ॥

(रचनातिथिः २४-१२-१९७५)

# वेदवाणीं नुमः

पश्य देवस्य काव्यं यदास्तेऽमृतं
यज्जराबधितं नो भवेज्जातुचित् ।
अस्य संज्ञास्ति वेदः, सदा पावनीं
वेदवाणीं नुमो वेदवाणीं नुमः ॥१॥

नैव पश्येदभद्रं नरश्चक्षुषा
नैव चाकर्णयेद्वाप्यभद्रं क्वचित् ।
भावनेयं यदीयास्ति तां पावनीं
वेदवाणीं नुमो वेदवाणीं नुमः ॥२॥

अन्तरिक्षद्युवारिक्षमासु ध्रुवं
शान्तिसाम्राज्यमास्तां सदा राजितम् ।
कामनेयं यदीयास्ति तां पावनीं
वेदवाणीं नुमो वेदवाणीं नुमः ॥३॥

स्याम एकत्रिताः, संवदध्वं समे
मानसं शैवसंकल्पपूतं भवेत् ।
प्रेरणेयं यदीयास्ति तां पावनीं
वेदवाणीं नुमो वेदवाणीं नुमः ॥४॥

अस्ति माता मदीया धरेयं तथै-
वास्म्यहं तत्सुतस्तत्सपर्यापरः ।
घोषणेयं यदीयास्ति तां पावनीं
वेदवाणीं नुमो वेदवाणीं नुमः ॥५॥

राष्ट्रमास्तां सुपुष्टं समृद्धं सदा
त्यागभोगौ सखायौ भवेतां तथा ।
देशनेयं यदीयास्ति तां पावनीं
वेदवाणीं नुमो वेदवाणीं नुमः ॥६॥

वारिवाहः सुकाले समागच्छतात्


सन्तु गावश्च पुष्टाः समस्तास्तथा ।

मार्गणेयं यदीयास्ति तां पावनीं

वेदवाणीं नुमो वेदवाणीं नुमः ॥७॥

'मा जलानां तरूणां च हिंसा कुरु'

'द्यूतखेलां परित्यज्य कर्षं कुरु ।'

मानवं या दिशन्ती, श्रुतिं तां मुदा

वेदवाणीं नुमो वेदवाणीं नुमः ॥८॥

कर्म कुर्वञ्छताब्दो नरो जीवतात्

स्वस्ति पन्था भवेत्प्राणिनां सर्वदा ।

ईदृशीं स्वस्थदृष्टिं दिशन्तीं नृणां

वेदवाणीं नुमो वेदवाणीं नुमः ॥९॥

'नैकधर्मास्तथानेकवाचो नरा

मातरं भूमिमेनां सदा रक्षत ।'

राष्ट्रियां वैश्विकीमेकतां तन्वतीं

वेदवाणीं नुमो वेदवाणीं नुमः ॥१०॥

(रचनातिथिः २८-२-१९९५)

# धन्वन्तरिं तमीडे

आविर्बभूव योऽब्धेरमृतं घटे दधानः ।
पातुं जनानपथ्याद् धन्वन्तरिं तमीडे ॥१॥

विष्णुस्वरूप आयुर्वेदस्य योऽस्ति कर्ता ।
भगवन्तमम्बुजाक्षं धन्वन्तरिं तमीडे ॥२॥

आद्यं शरीरमास्ते धर्मस्य साधनं यत् ।
तद्रक्षितुं दिशति यो धन्वन्तरिं तमीडे ॥३॥

चरकाय सुश्रुताय प्रथिताय वाग्भटाय ।
यः प्रेरणां प्रदत्ते धन्वन्तरिं तमीडे ॥४॥

अद्यापि यस्य भक्ता अष्टाङ्गमाचरन्तः ।
स्वस्थं जगद्विदधते धन्वन्तरिं तमीडे ॥५॥

'सर्वे भवन्तु सुखिनः, सर्वे निरामयाः स्युः' ।
इयमस्ति यस्य कांक्षा धन्वन्तरिं तमीडे ॥६॥

(रचनातिथिः ८-९-१९९१)

# महाकाल-मालिका

## ( स्तोत्रम् )

श्रीमहादेव शम्भो जय जय ।
देवाधिदेव शम्भो जय जय॥

जय साम्बसदाशिव शम्भो जय ।
जय चन्द्रमौलि-परमेश्वर जय ।
कैलाशपते · पार्वतीपते
जय जगत्पते शंकर जय ।
श्रीमहादेव शम्भो जय जय ॥

जय शिव हर मृड भव रुद्र भीम
पितृसद्मनिलय पशुपतेऽसीम ।
जय महादेव जय विरूपाक्ष
ईशान महेश्वर जय जय जय ॥
श्रीमहादेव शम्भो जय जय ॥

जय सोमनाथ शम्भो जय जय
मल्लिकार्जुन प्रभुवर जय जय ।
जय वन्द्य शर्व जगदीश्वर जय
ओंकारेश्वर रामेश्वर जय ॥
श्रीमहादेव शम्भो जय जय ॥

हे त्र्यम्बकेश केदारनाथ
ज़य घुष्मेश्वर जयदमरनाथ ।
जय मदनदहन हे त्रिपुरदहन
जय पापदहन त्रिनयन जय जय ॥
श्रीमहादेव शम्भो जय जय ॥

जय गंगाधर जय पार्वतीश
जय नीलकण्ठ जय जय गिरीश ।
जय भूतेश्वर जय सिद्धेश्वर
जय विश्वेश्वर भुवनेश्वर जय ॥
श्रीमहादेव शम्भो जय जय ॥

एकलिंग जय लिंगराज जय
स्थाण्वीश्वर जय नञ्जनगुड जय ।
जय गौरीशंकर जय जय जय
जय लोहितनील दिगम्बर जय॥
श्रीमहादेव शम्भो जय जय ॥

त्रिपुटीश मतगेंश्वर महेश
जय गुह्यकेश जय नन्दिकेश ।
जय महाबलेश्वर धारेश्वर
ममलेश वटेश्वर जय जय जय ॥
श्रीमहादेव शम्भो जय जय ॥

नटराज चिदम्बर गरलाशन
जय घण्टाकर्णदुःखनाशन ।
भस्मासुरवाणादिवरद जय
जय मार्कण्डेय-कृपाकर जय ॥
श्रीमहादेव शम्भो जय जय ॥

जय हे त्रिमूर्ति-दक्षिणेश जय
नित्यान्धकरिपु-नर्मदेश जय ।
अचलेश्वर जय गोपेश्वर जय
गौरीश गणेश्वर जय जय जय ॥
श्रीमहादेव शम्भो जय जय ॥

जय वृषवाहन गजवदनतात
गिरिजाधव हे षड्वदनतात ।
नागेन्द्रहार भस्मांगराग
मणिकर्णिकेश हर हर जय जय ॥
श्रीमहादेव शम्भो जय जय ॥

जय काशी-विश्वनाथ जय जय
जय प्रलयंकर शंकर जय जय ।
जय ताण्डवकर जय विश्वरूप
नागेश नटेश्वर हरिहर जय ॥
श्रीमहादेव शम्भो जय जय ॥

अष्टमूर्ति जय जय पिनाकधर
जय वृषभध्वज जय त्रिशूलधर ।
जय डमरूद्वेलन नृत्यप्रिय
कैलासशिखरवासिन् जय जय ॥
श्रीमहादेव शम्भो जय जय ॥

विद्याप्रसूति-देवाधिनाथ
रतिवरदायक जय भूतनाथ ।
निर्वाणरूप वेदस्वरूप
अज ! अनन्त! जय निर्गुण जय जय ॥
श्रीमहादेव शम्भो जय जय ॥

जय रावण-रामचन्द्र-पूजित
जय परशुराम-कुम्भज-पूजित ।
सुरनरमुनिकिन्नरदेववन्द्य
उरगासुरभूतवन्द्य जय जय ॥
श्रीमहादेव शम्भो जय जय ॥

शितिकण्ठ शिवाप्रिय नागान्तक

शशिशेखर दक्षयज्ञनाशक ।
जय जय कपालमालाभूषित
जय परमघोर जय मृत्युंजय ॥
श्रीमहादेव शम्भो जय जय ॥

पंचानन योगिन् नन्दीश्वर
सूर्याग्निचन्द्रलोचन ईश्वर ।
श्रीकण्ठ भर्ग धूर्जटे विभो
स्वरमय सर्वज्ञ सामप्रिय जय ॥
श्रीमहादेव शम्भो जय जय ॥

वेदान्तसारसन्दोह जप्य
हे व्योमकेश हे विमलोदय
जय खण्डपरशु-हर वृषाकपे
गोपते गोप्तृसर्वेश्वर जय ॥
श्रीमहादेव शम्भो जय जय ॥

उग्रेश मयोभव शंकर जय
विश्वेश मयस्कर शिवतर जय ।
त्र्यम्बक सुगन्धि-पुष्टिप्रद जय
त्वं कर्ता भर्ता हर्ता, जय ॥
श्रीमहादेव शम्भो जय जय ॥

पार्वतीतपस्याक्रीतदास
मेना-नगपति-पुण्यप्रकाश ।
जडचेतनमय हे प्रमथनाथ
जय, निष्कल सकल निरंजन जय ॥
श्रीमहादेव शम्भो जय जय ॥

दिक्कालाद्यनवच्छिन्नरूप

जय हे ब्रह्मानन्दस्वरूप ।
जय निराकार जय भक्तवरद
लोकेश रमाकान्तप्रिय जय ।
श्रीमहादेव शम्भो जय जय ॥

विश्वात्मन् भवते नमो नमः
हे महाकाल ! ते नमो नमः
अक्षरमालां स्वीकुरु भगवन् !
सच्चिदानन्द हे ज्योतिर्मय ।
श्रीमहादेव शम्भो जय जय ॥

इति नवदिल्लीस्थवाणीविहारवासिश्रीरमाकान्तशुक्लप्रणीतं भास्कराचार्यसंस्कृतं 'महाकाल-मालिका' नाम स्तोत्रं सम्पूर्णम्। पठतां श्रृण्वतां च शुभमस्तु ।

(रचनातिथिः शिवरात्रिः १९९२)

# नमः शास्त्रिणे वीरधुर्याय तस्मै

यमालोक्य लोकस्य सेवासु सक्तं
सदा मातृभूमिः प्रसन्ना बभूव ।
व्यधाद् यः समस्तं जनौघं स्वभक्तं
नमः शास्त्रिणे वीरधुर्याय तस्मै ॥१॥

सदा यस्य वक्तृत्वपीयूषधारां
निपीयाऽभवन् देशभक्ता अमर्त्याः ।
अभूवंश्च शत्रोः कृते ते कृतान्ताः
नमः शास्त्रिणे वीरधुर्याय तस्मै ॥२॥

सदा कर्षकैर्मन्त्रदो यः प्रतीतो
गृहीतो भटैर्यः समुत्साहपुञ्जः ।
मतः शान्तिकामैश्च यः शान्तिदूतो
नमः शास्त्रिणे वीरधुर्याय तस्मै ॥३॥

न मम्लौ यदीयं मुखं निःस्वतायाम्
प्रसन्नं न चित्तञ्च मन्त्रित्वलाभे ।
सदा कर्मठो यः स्थितप्रज्ञ आसी-
न्नमः शास्त्रिणे वीरधुर्याय तस्मै ॥४॥

सदा सञ्चितं येन वृत्तं न वित्तम्
सदा स्वीकृतं चार्जवं नैव दैन्यम् ।
प्रियं यस्य कार्यं न चैव प्रभुत्वम्
नमः शास्त्रिणे वीरधुर्याय तस्मै ॥५॥

दृढं यन्मनो वज्रराशिं बभार
कृशं यच्छरीरं हिमाद्रिं दधार।
बलिञ्चाकरोज्जीवनं यो जनन्यै
नमः शास्त्रिणे वीरधुर्याय तस्मै ॥६॥

(रचनातिथिः २-१०-१९६५)

# उज्जयिनीयं जयति

क्षणमपि दृष्टा यालोकयितुर्जातु जहाति न चित्तम् ।
उज्जयिनीयं जयति विशाला बुधजनवन्द्या नित्यम् ॥
उज्जयिनीयं जयति विशाला कविगणवन्द्या नित्यम् ॥

(१)

उद्घाटयति निजं हृदयं ब्रूते निजकथा अतीताः
श्याममृत्तिका पृष्टा प्रेम्णा यस्या लोकातीता ।
कालिदास-शूद्रक-विक्रम-वेताल-विलक्षणघटनाः
कविकुलवर्णितविविधदेशवस्तूच्चयरीतिविरचनाः ॥

प्रत्यक्षं तनुते मानसमोदाय समेषां सततम्
उज्जयिनीयं जयति विशाला बुधजनवन्द्या नित्यम् ॥

(२)

उदयनवादसवदत्ता-सेनाचारुदत्त-कल-गाथाः
केकीत्रासककबरीभाराः सुरभिलधूपसनाथाः ।
लोलापाङ्गैर्लसितास्तन्व्यः श्यामा मध्ये क्षामाः
श्रोणीभारादलसितगमनाः तन्त्रीवादनकामाः ॥

पदे पदे साक्षात्क्रियन्ते यत्र सहृदयैर्नित्यम् ।
उज्जयिनीयं जयति विशाला बुधजनवन्द्या नित्यम् ॥

(३)

हारास्तारास्तरला गुटिका भाण्डसमूहा भव्याः
पुष्पस्तबकाः शेखरहारा माला नव्या नव्याः ।
शिप्रावाताः कविसंघाता महाकालशिवभक्ताः
शास्त्रकाव्यनाटकसंगीतानां गोष्ठीष्वनुरक्ताः ॥

यत्राद्याप्यविरतं हरन्ति प्रेक्षावतां सुचित्तम्।
उज्जयिनीयं जयति विशाला बुधजनवन्द्या नित्यम् ॥

(४)

अत्रैवाभिरूपभूयिष्ठा विक्रमपरिषत् शुशुभे
या कविकालिदासकृतनाटकवीक्षणाय खलु लुलुभे ।
अत्रैवापरितोषाद्विदुषां कविना यत्नोऽकारि
वाणो विजहरात्र निश्चितं सहृदयहृदयविहारी ॥
अत्रागत्य जायते चित्तं शिवं सुन्दरं सत्यम् ।
उज्जयिनीयं जयति विशाला बुधजनवन्द्या नित्यम् ॥

(५)

शिप्रास्नानं यत्र धर्मिणः कलिमलदारणनिपुणम्
अर्थकामिनो विपणिविभागं नानापण्यसुपूर्णम् ।
कामकामिनोऽभिमतं स्थानं नवलविलासोल्लसितम्
मोक्षार्थिनो महाकालेशं ज्योतिर्लिङ्गं प्रथितम् ।
क्षीरसागर[१] यान्ति च रसिका नद्यो यथा समुद्रम् ।
उज्जयिनीयं जयति विशाला बुधजनवन्द्या नित्यम् ॥

(६)

'चल चल भामिनि चल सिंहस्थं द्वादशवर्षैर्लब्धम्'
'चल गजगामिनि कार्तिकमेलाक्षेत्रं कौतुकलुब्धम् ।'
'चल मूढे क्रीणामि सुमाल्यं मालीपुरे त्वदर्थम्'
'अहो श्रूयते कार्तिकमासे शृणु शृणु कोकिलविरुतम्'॥
यत्रेत्थं चाटूयति रमणो दयितानिर्दयचित्तम् ।
उज्जयिनीयं जयति विशाला बुधजनवन्द्या नित्यम् ॥

(७)

प्रतिवर्षं खलु यस्याः शिप्रातीरे विचलितधीरे
'माच'दर्शनोत्सुकैर्मालवैः मेलाशीतसमीरे ।
अविदितगतयामा रजनी नीयतेतरां निश्चिन्तम्
झंझावाते घनघनवर्षे वापि शीतले नीरे ॥
अहो मधुरिमा, अहो प्रमोदो यस्या अतुलो नित्यम् ।
उज्जयिनीयं जयति विशाला बुधजनवन्द्या नित्यम् ॥

---

१. क्षीरसागरनामकं कालिदाससमारोहाङ्गभूतसांस्कृतिककार्यक्रमायोजन-स्थानम्।

(८)

रविकरचुम्बितकमलविकासैः मदकलसारसनादैः
मालविकानां सुमधुरहासैः विबुधशिरोमणिवादैः ।
देवोत्थानवह्निखेलाभिर्नवनवदीपविलासैः
भैरवगढमुद्रितवस्त्राणां चेतोहरैः सुहासैः ॥

बालवृद्धयूनां परिहासैर्या जयति जगच्चितम् ।
उज्जयिनीयं जयति विशाला बुधजनवन्द्या नित्यम् ॥

(९)

चमरपुच्छिका[२]खण्डितकन्दुक[३]कुसुममनोहरवर्षैः
कविकविताप्रस्तुतिवेलायां सहृदयसुहृदां हर्षैः ।
अतिथीनां विदुषां सचेतसां सुमनोरथचंक्रमणैः
व्याससमासरीतिवक्तव्यैः भावानां संक्रमणैः ।
कीर्तिमन्दिरं भाति हि यस्याः कालिदासमहमहितम्
उज्जयिनीयं जयति विशाला बुधजनवन्द्या नित्यम् ॥

(१०)

पक्षप्रहारैश्चंचुश्लेषैः गुटरगुटरगूंकारैः
मानैरनुधावनैरथो मदनाज्ञापालनचारैः ।
द्वाभ्यां तथा तृतीयस्योत्सारणैर्यत्र निःशुल्कं
अश्मभ्योऽपि हि प्रेमकलामुपदिशति कपोतसमूहः ॥

विक्रमकीर्तिमन्दिरं तद्यस्या अक्षय्यं वित्तम् ।
उज्जयिनीयं जयति विशाला बुधजनवन्द्या नित्यम् ॥

---

२. 'गिलहरी' इति हिन्द्याम् ।

३. 'गेंदा' इति हिन्द्याम् ।

( ११ )

हरसिद्धिं योगेश्वरसदनं मलङ्गनाथं रम्यं
भर्तृहरेर्गह्वरं, चाश्रमं सान्दीपनेः पवित्रम् ।
ज्येष्ठगणेशं, पञ्चमुखं हनुमन्तं भवभयहरणम्
दर्शनीयमथ नानातत्त्वं यस्यां विस्मयकरणम् ॥

वीक्ष्य भवति नहि कस्य मनो ऽवद श्रद्धा-विस्मयभरितम् ।
उज्जयिनीयं जयति विशाला बुधजनवन्द्या नित्यम् ॥

( १२ )

यत्रागत्य निवर्तितुमिच्छति नैवागन्तुकलोकः
श्रावं श्रावं यस्या गाथां तृप्तिं याति न लोकः ।
स्मारं स्मारं यस्या विभवं भवति विस्मितो लोकः
पेयं पेयं यस्या शोभां माद्यति सर्वो लोकः ।
यस्या विरहो जनयति मोहं, व्यथयति दृढमपि चित्तम्।
उज्जयिनीयं जयति विशाला बुधजनवन्द्या नित्यम् ॥

( १३ )

विहरति विहसति विलसति नृत्यति या मानसे न केषाम्?
सुखयति मदयति रमयति रसयति या मानसं न केषाम् ?
सरला सरसा मुग्धोदारा या राजते समेषाम् ।
शुभदा सुखदा वरदादरदा या राजते समेषाम् ।
सर्वशुक्लया वाग्देव्या खलु यत्र समोदं हसितम् ॥
उज्जयिनीयं जयति विशाला बुधजनवन्द्या नित्यम् ॥१३॥

(रचनातिथिः ३१-११-१९८२, उज्जयिन्याम्)

# राजस्थानम्

यद्विदुषां वीराणां धनिनां श्रमिकाणां च निधानम् ।
जयति मनोज्ञं लसति ललामं तदिदं राजस्थानम् ॥

(१)

शिलादेवि - गलताजी - बालाजी - श्रीनाथद्वारैः ।
एकलिङ्ग - पुष्कर - कौलायत - करणी - रामद्वारैः ॥
रामधाम - रणछोड़ - साँभरा - सर्वेश्वर - जयकारैः ।
श्रीद्वारकाधीश - लोहार्गल - प्रभृतितीर्थपरिवारैः ॥
त्रिविधतापतप्तेभ्यो नित्यं यद्ददाति शमदानम् ।
जयति मनोज्ञं लसति ललामं तदिदं राजस्थानम् ॥

(२)

बप्पारावल - राणासाँगा - गोरा - बादल - वीरैः ।
सिंहप्रताप - सदृशरणवीरैः सन्धापालनधीरैः ॥
दुर्गावती - पद्मिनी - हाडीरानी - विश्रुतवृत्तैः ।
अङ्गीकृतसुव्रतजौहरनारीणां दिव्यसुचरितैः ॥
यद्विदधाति जगज्जनतायाश्चारित्रस्योत्थानम् ।
जयति मनोज्ञं लसति ललामं तदिदं राजस्थानम् ॥

(३)

डिङ्गल - पिङ्गल - वयणसगाई - काष्ठपुत्तलीनृत्यैः ।
रत्नपरीक्षा - प्रस्तरखण्डन - ढोला - मारू - वृत्तैः ॥
अणुविस्फोटपरीक्षण - पुस्तकभाण्डाराणुविकासैः ।
आर्हत - वैदिक - धर्मप्रचारैर्विविधकलानां हासैः ॥
यद्ददाति तैस्तैश्च विशेषैर्निजवैभवप्रमाणम् ।
जयति मनोज्ञं लसति ललामं तदिदं राजस्थानम् ॥

(४)

तप्ते यन्मरुदेशे मधुरा 'मत्तीराः' रसपूर्णाः ।
यस्य 'राबड़ी' लोकप्रसिद्धा आस्वादैरापूर्णा ॥
यन्मरुभाषाबद्धवाङ्मयं शोधकमोदविधायि ।
दुग्धसारशष्कुलीसेवनं यस्य च तृप्तिविधायि ॥
यन्मालिन्या बीकानेर्याः सिद्धं तुलाविधानम् ।
जयति मनोज्ञं लसति ललामं तदिदं राजस्थानम् ॥

(५)

'अस्मि प्रेमप्रमत्ताहं मम पीडां वेद न कश्चित्' ।
'गिरधरपुरतो नर्तिष्यामि रोत्स्यति मां नहि कश्चित्' ॥
'मम तु केवलं गिरिधरगोपो नान्यः कोऽपि जगत्याम्' ।
इत्येवं वचसा मनसा कर्मणा रताया भक्त्याम् ॥
अमृतं कृत्वा विषं पिबन्त्या यन्मीरायाः स्थानम् ।
जयति मनोज्ञं लसति ललामं तदिदं राजस्थानम् ॥

(६)

घघरा - कञ्चुक, बिन्दुशाटिका - गोटावृतिवसनानाम् ।
कटक-बोरला-नूपुर-नथली-वलयाङ्गद-रशनानाम् ॥
टड्डे - वाटे - बँगड़ी - कंगन-चूड़ा - हथफूलानाम् ।
टीका-झुमका-हँसली-टिकली-कटिका-रमझोलानाम् ॥
विच्छित्त्या भरितं यत्तनुते चारुत्वस्य वितानम् ।
जयति मनोज्ञं लसति ललामं तदिदं राजस्थानम् ॥

(७)

कज्जलकलितललितनयनानां मँहदीरक्तकराणाम् ।
धृतविविधाभूषणवसनानां लोकरीतिपरकाणाम् ॥
दूर्वालङ्कृतकरकमलानामर्चनगीतपराणाम् ।
बालानां सौभाग्यवतीनां धृतमस्तककलशानाम् ॥
उपचारैर्विविधैर्विलसति यस्मिन् गणगौरविधानम् ।
जयति मनोज्ञं लसति ललामं तदिदं राजस्थानम् ॥

(८)

मुरकी - कमरी - पगड़ी - धोती - धौड़ीपादत्राणैः ।
लसिता यस्य जना शोभन्ते नित्यं श्मश्रूत्थानैः ॥
अश्मखण्डने मूर्तिविरचने शोभनगृहनिर्माणे ।
यस्य श्रमिका नित्यं निरता मार्गाणां च विधाने ॥
प्रकृतिकोपदलिता अपि नित्यं विदधति देशोत्थानम् ।
जयति मनोज्ञं लसति ललामं तदिदं राजस्थानम् ॥

(९)

गिरिधरशर्मचतुर्वेदोपमविद्वद्रत्नैर्लसितम् ।
मञ्जुनाथमथुरानाथोपमकविवरवैभवलसितम् ॥
बाँकीदास - सूर्यमल्लागरचन्दयशोभिर्लसितम् ।
काँकर- झाबरमल्ल-सबा-रांगेय-गुलेरी-लसितम् ॥
विद्याधरमहितं यद् धत्ते ज्ञानमथो विज्ञानम् ।
जयति मनोज्ञं लसति ललामं तदिदं राजस्थानम् ॥

(१०)

हल्दीघाटी - चेतकशौर्यं स्मारं स्मारं यस्य ।
अर्बुदलोकोत्तरसौन्दर्यं दर्शं दर्शं यस्य ॥
अगणितवीराणां कलगाथाः श्रावं श्रावं यस्य ।
अभिनवकुल्याजलसञ्चारं लोकं लोकं यस्य ॥
अवसन्नस्यापि जनस्य मनो लभतेऽद्भुतमुत्थानम् ।
जयति मनोज्ञं लसति ललामं तदिदं राजस्थानम् ॥

(११)

क्षणे क्षणे या नवतां धत्ते कणे कणे कलगानम् ।
गृहे गृहे या कमलां धत्ते पदे पदे सम्मानम् ॥
दिनं दिनं या पर्व विधत्ते जनं जनं सोल्लासम् ।
नयने नयने लीलां धत्तेऽधरेऽधरे च सुहासम् ॥
एवंभूता पाटलनगरी यस्यानन्दनिधानम् ।
जयति मनोज्ञं लसति ललामं तदिदं राजस्थानम् ॥

(१२)

पवनप्रासादेन[१] वैद्यविदुषां नैपुण्यविलासैः ।
चन्द्रप्रतोल्या[२] चतुष्पथैरथ रम्योपवनविलासैः ॥
चित्रविचित्रनामपट्टैरापणिकोदारसुमार्गैः ।
आगन्तूनां वित्तहराणामापणिकानां भागैः ॥
लसिता यज्जयपुरी विधत्ते वृद्धं जनं युवानम् ।
जयति मनोज्ञं लसति ललामं तदिदं राजस्थानम् ॥

(१३)

घर्मच्छायापीतश्यामा क्वाप्यरावली रम्या ।
क्वापि कुरङ्गली चलचरणा रोमंथिनी विलोक्या ॥
क्रमेलकानां क्वचिदपि मानवकार्यार्थं सहयोगः ।
दृश्यः क्वचिदपि गोण्डवणानां रूपस्वरसंयोगः ॥
यस्मिन् दृश्यं क्वापि नृत्यगीतानां मधुरविधानम् ।
जयति मनोज्ञं लसति ललामं तदिदं राजस्थानम् ॥

(१४)

दिलवाड़ा-गोविन्द-बिहारी-मन्दिराणि दिव्यानि ।
राजसमन्दं बालसमन्दं स्थानान्यथ भव्यानि ॥
आमेरे बीकानेरे जैसलमेरे दुर्गाणि ।
जोधपुरोदयपुरामेर - जल - झील - काच - महलानि ॥
श्वेतरक्तपाषाणानथ धत्ते यत्ताम्रनिधानम् ।
जयति मनोज्ञं लसति ललामं तदिदं राजस्थानम् ॥

(१५)

अर्थिकामपूरणं विधत्ते यत्र गरीबनिवाजः[१] ।
भूमण्डले समस्ते व्याप्तो यद्व्यापारिसमाजः ॥
यस्य श्रमिका जगत्प्रसिद्धाः सत्वरकर्मविधाने ।
यस्य च धनिका जगत्प्रसिद्धा धर्मार्थं धनदाने ॥
रणाङ्गणे यद्वीरस्तनुते ह्यनुपमशौर्यवितानम् ।
जयति मनोज्ञं लसति ललामं तदिदं राजस्थानम् ॥

( १६ )

असमयवृष्टिं दुर्भिक्षं वा भूमेरूषरतां वा ।
वह्निवातभूकम्पावर्षणजनितानुपद्रवान् वा ॥
पेयजलाभावं पशुचाराभावं वस्त्राभावम् ।
संमुचितशिक्षावसराभावं वृत्तिनिश्चयाभावम् ॥
जेतुं यतते श्रमबलतो यन्नित्योत्साहनिधानम् ।
जयति मनोज्ञं लसति ललामं तदिदं राजस्थानम् ॥

( १७ )

यद्वर्णयितुं यज्ज्ञापयितुं शब्दास्तिष्ठन्त्यल्पाः ।
यस्य द्रष्टुं वैभवमखिलं ह्यपेक्षिता वै कल्पाः ॥
यस्य झील - वापिका-सागरान् को वा मातुं शक्तः ?
विजयस्तम्भं यस्य चोन्नतं को विस्मर्तुं शक्तः ?
नानादेशसमायातानां विहगानां यत्स्थानम् ।
जयति मनोज्ञं लसति ललामं तदिदं राजस्थानम् ॥

(रचनातिथिः १३-४-१९८३)

# अहं स्वतन्त्रता भणामि[1]

अहं स्वतन्त्रता भणामि मद्वचो निशम्यताम् ।
निधाय मानसे च तद् यथोचितं विधीयताम् ॥
अहं स्वतन्त्रता भणामि ..................॥

(१)

मदर्चनाकृते शिरांस्युपायनीकृतानि यैः,
धनं वपुस्तथा मनः सहर्षमर्पितानि यैः ।
अवापुरात्मवक्षसि ज्वलद्भुशुण्डिगोलिकाः,
गतास्त एव मे जना सदैव वन्दनीयताम् ॥
अहं स्वतन्त्रता भणामि ..................॥

(२)

भवद्भिरन्तरिक्षगा जनाः स्वदेश ईक्षिताः,
भवद्भिराततायिनाशकारिणोऽपि दीक्षिताः ।
कृतं भवद्भिरेशियाद्व्यशीतिखेलयोजनम्,
तदेतदर्थमद्य मे शुभेहितं प्रगृह्यताम् ॥
अहं स्वतन्त्रता भणामि ..................॥

---

१. आकाशवाण्या समस्तकेन्द्रेभ्यः २५-१-१९८७ ई० तारिकायां रात्रौ ९.४५ वादनकाले प्रसारिते सर्वभाषाकविसम्मेलने पठिता संस्कृतकविता।

( ३ )

भवद्भिरद्य दृश्यते यथार्थिकी समुन्नतिः,
भवद्भिरद्य दृश्यते नवा चं या विनिर्मितिः ।
भवद्भिरद्य यः स्वतन्त्रतारसो निपीयते,
तदेतदात्मजीवने चिरं चिराय धार्यताम् ॥
अहं स्वतन्त्रता भणामि .................॥

( ४ )

शुभाः हि कामनाः भवत्कृते समर्पयाम्यहम्,
समुन्नतिं सुखं च वः सदैव चिन्तयाम्यहम् ।
परन्तु वर्तमानया विचित्रकाललीलया,
मनाग् विचिन्तिता यदेव वच्मि तन्निशम्यताम् ॥
अहं स्वतन्त्रता भणामि .................॥

( ५ )

मया न कल्पितं कदापि दुर्बलाभिशोषणं
मया न कल्पितं कदापि दुर्जनाभिपोषणम् ।
मया न कल्पितं कदापि सज्जनावमाननम्
सहेऽखिलं च च तद् यथा सहै न तद्विधीयताम् ॥
अहं स्वतन्त्रता भणामि .................॥

( ६ )

विलोकयामि वृत्तिहीनतामहं यदा यदा,
विलोकयामि नीतिहीनतामहं यदा यदा ।
नताननना गतासुका भवाम्यहं तदा तदा,
इयं दशा न मेऽस्तु येन तत्सदा विधीयताम् ॥
अहं स्वतन्त्रता भणामि .................॥

(७)

यदा यदा श्रृणोम्यहं वधूविदाहपातकम्,
यदा यदा श्रृणोम्यहं बलात्कृतिं विहिंसनम् ।
तदा तदा भवाम्यरुन्तुदव्यथाप्रपीडिता,
इयं व्यथा प्रणाशमेतु येन, तद्विधीयताम् ॥
अहं स्वतन्त्रता भणामि ..................॥

(८)

स्वदेशवासिभिः स्वदेशवासिनां विहिंसनम्,
पृथक्त्वभावपोषणं स्वदेशदेहदारणम् ।
अधीतिपण्यविक्रयं करप्रदातृनिःस्वतां,
विलोक्य यां शुचं गतास्मि सा द्रुतं विलोप्यताम् ॥
अहं स्वतन्त्रता भणामि ..................॥

(९)

जलं न लभ्यते तथा, यथा सुरा पदे-पदे,
वचांसि सन्ति भूरिशो न हि क्रियाः पदे-पदे ।
पुनश्च भेदभावना प्रवर्त्यते पदे-पदे,
इदं दशा समर्थनं किमर्हतीति चिन्त्यताम् ॥
अहं स्वतन्त्रता भणामि ..................॥

(१०)

दलाद् दले पलायनं, प्रवञ्चनां क्षणे क्षणे
प्रतारणं जने जने, विहिंसनं पणे पणे ।
विलोक्य रोगदायकं विमिश्रणं कणे कणे,
गतास्मि यां शुचं हि सा द्रुतं द्रुतं विलोप्यताम् ॥
अहं स्वतन्त्रता भणामि ..................॥

(११)

अयोग्यता पदोन्नता, सुयोग्यता पदच्युता,
अमोघलाभकारिणी मता च चाटुकारिता ।
इयं स्थितिर्विलोक्यते यदा, तदा मम स्थितिः,
सुपुष्टतां भजेत्कथं ? भवद्भिरेव कथ्यताम् ॥
अहं स्वतन्त्रता भणामि ..................॥

(१२)

क्वचिद्विलाससाधनैर्विमण्डिता विलासिनः,
क्वचित्क्षुधाप्रपीडिता वसन्ति देशवासिनः ।
क्वचित्पयस्विनी धनस्य कुत्रचिच्च निःस्वता,
इयं दशा विलोपमेतु येन तद्विधीयताम् ॥
अहं स्वतन्त्रता भणामि ..................॥

(१३)

कथं पदातिमार्ग एव शेरते हि कार्मिकाः,
कथं च धर्मनाम्नि सर्वमाचरन्ति धार्मिकाः ।
कथं च देहविक्रयो विधीयते सुयोजितम्
इदं निरीक्ष्य मानसे समीक्षणं विधीयताम् ॥
अहं स्वतन्त्रता भणामि ..................॥

(१४)

अहं स्मरामि कष्टपद्धतिं पुरानृणां यदा,
अहं भवामि गद्गदाभिमानसंयुता तदा ।
विलोक्य किन्तु वर्तमाननेतृलाभकांक्षितां,
व्रजान्यहं मुदं ह्यथो शुचं ? स्वयं विचार्यताम् ॥
अहं स्वतन्त्रता भणामि ..................॥

( १५ )

धनस्य वा श्रमस्य वा न कृच्छ्रतास्ति भारते
समस्तधातवो मिलन्ति भारते प्रभारते ।
उदेति या यदा-कदा तथापि बुद्धिहीनता
न सा कदाप्युदेतु येन तत्सदा विधीयताम् ॥
अहं स्वतन्त्रता भणामि ..................॥

( १६ )

न निर्धनो न निर्बलो जनोऽत्र कोऽपि जायताम्,
न कस्यचित्समादरो विखण्डितश्च जायताम् ।
निजावलम्बनं जने जने सदा प्रवर्धताम्,
जनो जनोऽस्य भारतस्य मोदताम्, प्रमोदताम् ॥



(रचनातिथिः १५-८-१९८३)

---

(आकाशवाणीतः ३, ६, ११, १३, ४ संख्याकानि पद्यानि न प्रासार्यन्त। इयं कविता इत पूर्वम् अर्वाचीनसंस्कृतस्य पञ्चमवर्षीये चतुर्थेऽङ्केऽपि प्रकाशिता बभूव किन्तु २, १३ संख्याके पद्ये तत्र न आस्ताम्।)

# रौति ते भारतम् !

कश्चिदुवाच-

किं रमाकान्त ! नित्यं त्वया भण्यते
'भाति मे भारतं भाति मे भारतम् ।'
किं न पश्यस्यनेकैरभावैर्युतं
रौति ते भारतं रौति तें भारतम् ॥१॥

कुत्रचिद्दीर्घपंक्तिस्थिता मानवाः
यापयन्ति स्वकालं प्रतीक्षापराः ।
मोचयन्ति स्वनिःश्वासराशीनहो !
यैर्व्यथामाप्नुवद् रौति ते भारतम् ॥२॥

रेलयानेषु भिक्षारपरान् बालकान्
अङ्गहीनानवस्त्रान् दयोत्पादकान् ।
गालिभिः पोषितान् न्यक्कृतैस्तोषितान्
वीक्ष्य चिन्तामयं रौति ते भारतम् ॥३॥

वृत्तपत्रेषु नित्यं बलात्कारिणां
निन्द्यपैशाचकृत्यानि पश्यत् पठत् ।
किञ्च हत्यापहारादिगाथा वहत्
रौति ते भारतं रौति ते भारतम् ॥४॥

क्वाप्यशिक्षातमोभिर्वृतं कष्टदैः
क्वापि रोगैः परीतं महादारुणैः ।
नित्यमुत्कोचलीलाविलासैर्युतं
रौति ते भारतं रौति ते भारतम् ॥५॥

यौतुकप्रेप्सुभिर्लोलुपैर्निन्दितैः
मर्त्यरूपे स्थितै राक्षसैः कौटिकैः ।
दह्यमाना वधूर्वीक्ष्य दुःखेन हा
रौति ते भारतं रौति ते भारतम् ॥६॥

देहपण्याजिरे नूपुराकर्णनैः
पारवश्यांकितैर्नृत्यकृत्यैस्तथा ।
येन दारिद्र्यगाथोच्चकैर्गीयते
तद् व्यथापूरितं रौति ते भारतम् ॥७॥

यत्र रक्षाभटैः रक्षणीयो हतो
यत्र गोप्ता न गोप्यं क्षमो रक्षितुम् ।
यत्र सन्तो मता दस्यवो हिंसका
रौति तद् भारतं रौति तद् भारतम् ॥८॥

उच्चशिक्षां समाप्यामि वृत्त्यर्जने
न क्षमो जायते यत्र यूनां गणः ।
यत्र कुत्रापि वृत्त्यर्थमाहिण्ड्यते
रौति तद् भारतं रौति तद् भारतम् ॥९॥

हा कराधानकर्ताधिकारी स्वयं
यत्र धत्ते स्वगेहे विना सूचनाम् ।
कृष्णवित्तं तथा स्वर्णभाण्डं महद्
रौति तद् भारतं रौति तद् भारतम् ॥१०॥

कार्यरोधैस्तथा हिंसकान्दोलनैः
चाटुकारप्रणीतैर्वृथा भाषणैः ।
ईश्वरम्मन्यमानैरहो दम्भिभी
रौति ते भारतं रौति ते भारतम् ॥११॥

उग्रकृत्यैर्नरैर्यत्र मध्येपथं
पूर्वसेनापतिर्हन्यते गोलिभिः ।
यत्र चार्ता भिषग्भिर्बलाद्दूष्यते
निन्द्यकृत्यान्वितं रौति तद् भारतम् ॥१२॥

यत्र यूनां नवैर्मादकैर्वस्तुभिः
क्षीयते शक्तिरोजस्तथा लुप्यते ?
यत्र दृश्या युवानो जराजर्जरा
रौति तद् भारतं रौति तद् भारतम् ॥१३॥

कर्हिचिद्विश्वबन्धुत्वमुद्घोषयत्
पावयद्विश्ववन्द्यैश्चरित्रैर्जगत् ।
यत्तदेवाद्य विद्वेषहिंसाप्लुतं
रौति ते भारतं रौति ते भारतम् ॥१४॥

कर्षकेभ्यो यदान्नं भवेद् दुर्लभं
कार्मिकेभ्यश्च गेहं यदा दुर्लभम् ।
वस्त्रकृद्भ्यश्च वस्त्रं यदा दुर्लभं
तर्हि नूनं हहा ! रौति ते भारतम् ॥१५॥

कर्गले राष्ट्रभाषास्ति नो भाषणे
संस्कृतं स्तूयते, नैव तत्सेव्यते ।
स्वीयपादे कुठारः स्वयं पात्यते
वीक्ष्य सर्वं ध्रुवं रौति ते भारतम् ॥१६॥

रमाकान्त उवाच-

यत्त्वया कीर्त्यते दोषजातं सखे !
तन्मया सूचितं ह्येकपद्ये[१] पुरा ।
दोषवर्जं मया सद्गुणाः सञ्चिता-
स्तेन प्रोक्तं मया भाति मे भारतम्' ॥१७॥

कीर्तनेनैव वा क्रन्दनेनैव वा
लोपमेष्यन्ति दोषा न देशस्य वै ।
तेन सर्वैः क्रियन्तां सदा सुक्रियाः
येन भातु प्रसन्नं सदा भारतम् ॥१८॥

लोलुपा नायका नैव सन्त्वत्र भोः
सन्तु कर्तव्यशून्या न चापि प्रजाः ।
देशसेवां मिलित्वा कुरुध्वं समे
येन भूयोऽपि भासेत नो भारतम् ॥१९॥

(रचनातिथिः १२-१०-१९८५)

१. सन्तु दोषा अनेकेऽत्र कैश्चिन्मताः
किन्तु नाहं प्रपश्यामि तान् मन्दधीः ।
वन्दनीयं मया कीर्तनीयं मया
मोदतां वर्धतां राजतां भारतम् ॥
-'भाति मे भारतम्'- इत्यस्मिन् काव्ये १०७ संख्यके पद्ये

# राष्ट्रदेवते !

राष्ट्रदेवते ! कथं नु पूजनं करोमि ते ?
ब्रूहि देवते ! समर्चनं कथं करोमि ते ?

उग्रताविहिंसनोत्थचीत्कृतीः शृणोमि चेत्
राष्ट्रदेवते ! कथं नु कीर्तनं करोमि ते ॥

यावदाननानि हर्षफुल्लतां न चाप्नुयुः
ब्रूहि देवते ! सुमार्पणं कथं करोमि ते ॥

दन्दशूकवेष्टितं हि कार्यतन्त्रमस्ति चेत्
चन्दनं कथं समर्पयामि राष्ट्रदेवते ॥

वीक्ष्य कर्दमावृता हि कोटि-कोटिवीथिकाः
राष्ट्रदेवते ! कथं सुगन्धमर्पयामि ते ॥

सौमनस्यसूत्रगुम्फिता न चेत्स्थिता जनाः
राष्ट्रदेवते ! कथं सुमाल्यमर्पयामि ते ।
राष्ट्रदेवते ! कथं नु हारमर्पयामि ते ॥

पेयवारि दृश्यते यदा च वै सुदुर्लभं
स्नानवारि पावनं समर्पयामि किं नु ते ॥

हा ! वधूप्रदाहचीत्कृतीर्निशम्य नित्यशः
स्तोत्रमापठामि ते कथं नु राष्ट्रदेवते !

द्वेषकृत्प्रभंजनो हि यावदेति नो शमं
दीपकं कथं प्रदर्शयामि राष्ट्रदेवते !

एकलोऽपि वीक्ष्यतेऽन्नपीडितो मया यदि
राष्ट्रदेवते ! कथं नु भोज्यमर्पयामि ते !

वर्धते धनं हि, किन्तु निर्धनेषु तन्न चेत्
राष्ट्रदेवते ! कथं नु दक्षिणां ददामि ते ॥

मिष्टमर्पितं पुरैव 'भाति भारतं' हि ते ।
यन्मया कटूक्तमत्र तत्क्षमस्व देवते !

(रचनातिथि: २९-१२-१९८५)

# भारतजनताहम्

(१)

अभिमानधना विनयोपेता
शालीना भारतजनताहम् ।
कुलिशादपि कठिना कुसुमादपि
सुकुमारा भारतजनताहम् ॥

(२)

निवसामि समस्ते संसारे
मन्ये च कुटुम्बं वसुन्धराम् ।
प्रेयः श्रेयश्च चिनोम्युभयं
सुविवेका भारतजनताहम् ॥

(३)

विज्ञानधनाहं ज्ञानधना
साहित्यकला-संगीतपरा ।
अध्यात्मसुधातटिनी-स्नानैः
परिपूता भारतजनताहम् ॥

(४)

प्रस्तरखण्डेषु मयोत्कीर्णा
मूर्तयः सजीवा भाषन्ते ।
दिग्विजयिन्यो मे कलाः सन्ति
सहृदयास्मि भारतजनताहम् ॥

(५)

मम गीतैर्मुग्धं समं जगत्
मम नृत्यैर्मुग्धं समं जगत् ।
मम काव्यैर्मुग्धं समं जगद्
रसभरिता भारतजनताहम् ॥

( ६ )

उत्सवप्रियाहं श्रमप्रिया
पदयात्रा - देशाटन - प्रिया ।
लोकक्रीडासक्ता वर्धे-
ऽतिथिदेवा भारतजनताहम् ॥

( ७ )

कल्पनातीतदु:खानां वा
सौख्यानां वापि घराः काष्ठाः ।
समभावतया सोढुं शक्ता
समबुद्धिर्भारतजनताहम् ॥

( ८ )

कृत्वा भूमण्डलपर्यटनं
यं देशं स्वर्गं मनुते ना ।
तस्यैव नृपस्तस्यैव प्रजा
ऋजुचरिता भारतजनताहम् ॥

( ९ )

नाहं भ्रमेऽस्मि नां मोहे
विश्वं भ्रान्त्वा तथ्यं वदामि ।
प्रेरणां जगन्मत्तो लभते
धृतिशीला भारतजनताहम् ॥

( १० )

विश्वस्मिन् जगति गताहमस्मि
विश्वस्मिन् जगति सदा दृश्ये ।
विश्वस्मिन् जगति करोमि कर्म
कर्मण्या भारतजनताहम् ॥

(११)

लंघिताः पर्वताः अवरुद्धा
नद्यः प्रपूरिता जलाशयाः ।
सिक्ता मरवश्च यया बहुधा
महिता सा भारतजनताहम् ॥

(१२)

किं किं न तपस्तप्तं हि मया
स्वातन्त्र्यदेवताराधनाय ? ।
किं किं न सहे तद्रक्षार्थं
श्रमशीला भारतजनताहम् ॥

(१३)

ये मह्यं गालीर्ददुस्तथाऽ-
कुर्वन्नपकारं मम नित्यम् ।
जितवती तानहं तपोबलै-
र्गम्भीरा भारतजनताहम् ॥

(१४)

दारिद्र्यदु:खदावाग्निदग्ध-
देहापि नो म्रिये ह्यद्यावधि ।
साहस-जिजीविषा-कर्मठता-
पुत्तलिका भारतजनताहम् ॥

(१५)

दम्भोलिसन्निभा अपि विपदोऽ
नायासमेव सर्वा हि सहे ।
विषपानपरापि स्मितवदना
सर्वंसहभारतजनताहम् ॥

(१६)

आयातु यातु लक्ष्मीः स्तुवन्तु
निन्दन्तु नीतिनिपुणाः कामम् ।
उच्चावचमार्गे गच्छन्ती
सोत्साहा भारतजनताहम् ॥

(१७)

अण्वस्त्रनिर्मितिर्नो कठिना
मम कृते तथापि न तामीहे ।
वास्तविकी हेतिरहिंसा मे
निर्भीका भारतजनताहम् ॥

(१८)

संगणकयन्त्रजालोऽपि मेऽस्तु
भौतिक्युन्नतिरपि मे तथास्तु ।
जीवनरसश्च मा शुष्को भू-
दितिकामा भारतजनताहम् ॥

(१९)

आक्रमणं नैव करोमि कदा-
प्याक्रमणं नैव कदापि सहे ।
आर्जवं न मे मूर्खत्वमस्ति
दृढकवचा भारतजनताहम् ॥

(२०)

मैत्री मे सहजा प्रकृतिरस्ति
नो दुर्बलतायाः पर्यायः ।
मित्रस्य चक्षुषा संसारं
पश्यन्ती भारतजनताहम् ॥

ज्वालामुखिनं गिरिमारूढं
परमाणुदैत्यविकलितचित्तम् ।
अधुनापि जगच्छान्तिं ब्रूते
या सैषा भारतजनताहम् ॥

( २२ )

विद्वांसो वीराः शिल्पकराः
श्रमिणः सन्तः किं किं न मेऽस्ति ।
स्यादत्र न गृहभेदनपापम्
इतिकामा भारतजनताहम् ॥

( २३ )

अपि सहे बलात्कारान् हत्या
अपहृतीस्तथा तस्करवृत्तीः ।
नो सहे किन्तु देशस्य भंग-
मुन्निद्रा भारतजनताहम् ॥

( २४ )

नग्ना बुभुक्षिता निर्गेहा
सत्यपि जीवामि बहोः कालात् ।
जीविष्यामि च कल्पान्तमहं
मृत्युञ्जय - भारतजनताहम् ॥

( २५ )

जिह्वां मे कीलयितुं शक्तः
कः कोऽत्र जगति मातुर्जातः ।
वाणी विहरति मे सदोज्ज्वला
गर्जन्ती भारतजनताहम् ॥

नक्राश्रुजलं जाने सम्यग्
जाने च गृध्रगोमायुगिरम् ।
जाने करटक-दमनक-चरितं
हृदयज्ञा भारतजनताहम् ॥

( २७ )

तस्करा हिंसका गेहभिदो
मूढाश्च सन्तु मयि यदा कदा ।
ते किन्तु नैव परिभाषा मे
समुदारा भारतजनताहम् ॥

( २८ )

दृप्तानामंकुशतां भजामि,
नम्राणां रक्षकतां भजामि ।
दुष्टानां शिक्षकतां भजामि
लोकज्ञा भारतजनताहम् ॥

( २९ )

शासनासन्दिकामधिरोढुं
प्रतिनिधयो मे कुर्वन्ति न किम् ?
तां प्राप्य केऽपि यां विस्मरन्ति
मुग्धा सा भारतजनताहम् ॥

( ३० )

मुग्धा त्वहमस्मि परं दृप्तान्
लेहयामि धूलिं निजौजसा ।
जनतन्त्रपद्धतेर्गुडाकेश-
गोप्त्री खलु भारतजनताहम् ॥

(३१)

भारतभूमेरुत्पन्नाहम्
अस्याञ्च विलीये सामोदम् ।
सेविष्ये ह्येनामाजीवन-
मतिहृष्टा भारतजनताहम् ॥

(३२)

मोदे प्रगतिं दर्शं दर्शं
वैज्ञानिकीं च भौतिकीं परम् ।
दृश्येऽद्यत्वे लोकं लोकं
शठचरितं भारतजनताहम् ॥

(३३)

दारिद्र्यं वृत्तेर्न्यूनत्वं
सर्वमप्युपेक्षे काममहम् ।
नोपेक्षे किन्तु सतां पीडां
करुणार्द्रा भारतजनताहम् ॥

(३४)

आचरति दुर्जनो नीचकर्म
यत्तत्सर्वं जाने, जाने ।
प्राप्नोमि तथापि न निष्ठुरतां
करुणार्द्रा भारतजनताहम् ॥

(३५)

देशे निरागसां संहारं,
लुण्ठनं सतां च वधूदाहान् ।
श्रावं श्रावं दर्शं दर्शं
व्यथमाना भारतजनताहम् ॥

पश्यामि यदा कुटिलैः क्लृप्तां
मूढैश्च तां विघटनसरणिम् ।
विलपामि तदा खिन्ना खिन्ना,
चिन्ताकुलभारतजनताहम् ॥

( ३७ )

अभिसन्धि-धार्मिकोन्माद-भैक्ष्य-
शारीरपण्य-मिश्रणदोषैः ।
अस्वास्थ्यकरैश्च प्रदूषणै-
रतिविकला भारतजनताहम् ॥

( ३८ )

पश्यामि यदा मलिनां गंगां
सरितोऽन्या अग्निमथोद्गिरतीः।
तासां पवित्रतां शीतलतां
चेच्छन्ती भारतजनताहम् ॥

( ३९ )

स्वीयैरपराधैः ह्रीणाहं
स्वीयैर्दोषैरतिखिन्नाहम् ।
एकतां कामये नित्यं स्वां
जगदीश्वर ! भारतजनताहम् ॥

( ४० )

युवकात्मघात - मादकपदार्थ-
सेवनोत्कोच - दुर्बलघाताः ।
नो सन्तु मदीये देशेऽस्मि-
न्नितिकामा भारतजनताहम् ॥

( ४१ )

अविरुद्धान् वापि विरुद्धान् वा-
प्येकस्मिन् सूत्रे स्थापयितुम् ।
किं किं न मया क्रियते लोके
यत्नस्था भारतजनताहम् ॥

( ४२ )

ये दृश्या मयि दोषा नैकेऽ-
रुन्तुदा अवाच्याः कष्टकराः ।
कामये विलोपं वै तेषा-
मतिशीघ्रं भारतजनताहम् ॥

( ४३ )

अभितः परितः समया निकषा
मां यद्घटते तत्प्रेक्षेऽहम् ।
सर्वस्य कृते खलु सज्जा या-
सावहिता भारतजनताहम् ॥

( ४४ )

सागरे वियति धरणीपृष्ठे
भूधरशृंगेषु वनेषु मरौ ।
निजमातृभूमिरक्षणदक्षा
जितनिद्रा भारतजनताहम् ॥

( ४५ )

क्षेत्रेषु खलेषु तथा चैवम्
उद्योगगृहेषु कुटीरेषु ।
नित्यं समृद्धिमुत्पादयामि
निस्तन्द्रा भारतजनताहम् ॥

(४६)

नेतॄणां वार्तां नो करोमि
निजवार्तामेव परं भणामि ।
आराध्यदैवतं मे भारत-
माराधक - भारतजनताहम् ॥

(४७)

किं किं स्मरामि किं विस्मरामि,
किं किं लिखामि किं किं पठामि !
किं वा गायामि निजां गाथाम्
अविकत्थनभारतजनताहम् ॥

(४८)

जलबुद्बुदासंकाशाः कति नो
संस्कृतयो लुप्ताः संसारे ।
गंगाप्रवाह इव सनातनी
गतिशीला भारतजनताहम् ॥

(४९)

अथवा किं बहुना रमाकान्त ?
संक्षिप्ततया तथ्यं भणामि ।
हरिमेव जगज्जगदेव हरिं
पश्यन्ती भारतजनताहम् ॥

(५०)

परतन्त्रो मा भूत्क्वापि कोऽपि
सर्वः सर्वत्र सदा नन्दतु ।
जगतः स्वतन्त्रामिच्छन्ती
मोदे खलु भारतजनताहम् ॥

(रचनातिथिः १५-७-१९८६-विस्तारकालः १५-७-१९९२ यावत्)

# फिलाडेल्फिया

'पेनसिल्वानिया'-विश्वविद्यालये
सांस्कृतं विश्वसम्मेलनं षष्ठकम्[१] ।
योजयन्ती, लसन्ती बुधानां गणैः
राजते रम्यरूपा फिलाडेल्फिया ॥१॥

यत्र 'दाण्डेकरो'[२]ऽध्यक्षवक्तव्यदः
सम्यगुन्मील्य चार्वाक्तनं संस्कृतम्[३] ।
एडविन् गैरियो[४]-हस्तकञ्जेऽर्पयत्
राजते शोभना सा फिलाडेल्फिया ॥२॥

मण्डनो[५] बेण्डरो[६] रामकर्ण[७]स्तथा
भास्कराचार्य[८]-रेवाप्रसादादयः[९] ।
आप्नुवन् पत्रपाठेषु विज्ञादरं
राजते सा सुरम्या फिलाडेल्फिया ॥३॥

नैन्सिनेल्बेडिया[१०] सुन्दरी यत्र मां
श्रावयित्वा 'घनानन्द'[११]-काव्यं वरम् ।
दिव्य आनन्दसिन्धौ मुदास्नापयत्
राजते शोभना सा फिलाडेल्फिया ॥४॥

यत्र 'हैरीसन'[१२]-प्रेक्षणागारके
विश्वगीर्वाणवाणीकवीनां[१३] सभाम् ।
योजयित्वा रमाकान्त[१४] आस्ते सुखी
राजते शोभना सा फिलाडेल्फिया ॥५॥

मण्डनाध्यक्षसम्भाषणालङ्कृतं[१५]
रामकर्णस्य[१६] वाग्भिः समुद्घाटितम् ।
काव्यसम्मेलनं वीक्ष्य मोदं गता
राजते रम्यरूपा फिलाडेल्फिया ॥६॥

आर०वी० जोशि[१७]-सत्यव्रतावार०के०-
शर्म-कौठेकरौ[१८] श्रीरमाचौधुरी[१९] ।
भास्कराद्याश्च[२०] यत्रापठन् स्वाः कृतीः
राजते शोभना सा फिलाडेल्फिया ॥७॥

'भाति मे भारतं'[२१] यत्र काव्यं मया
सस्वरं श्रावितं श्रोतृवृन्दप्रियम् ।
तत्स्वरैर्मोहिता मोहितेवास्ति या
राजते सा सुरूपा फिलाडेल्फिया ॥८॥

श्रीहरेरामकृष्णाश्रमे[२२]ऽमेरिका-
देशजैर्भक्तवर्यैश्च यस्यां बुधाः ।
स्वागतेनार्चिता वैष्णवेनाध्वना[२३]
राजते शोभना सा फिलाडेल्फिया ॥९॥

अङ्कितैतिह्यगाथाभि[२४]रालोकिनी
शोभिताभ्रंल्लिहैरालयैः सर्वतः ।
स्वच्छता-शान्ति-विद्या-प्रकाशैर्युता
राजते रम्यरूपा फिलाडेल्फिया ॥१०॥

या पुराणी नवीना पुरी[२५] विद्यते
या प्रजातन्त्रघोषावनी विद्यते ।
नित्यमेव प्रकृत्या विलासैर्युता
राजते रम्यरूपा सा फिलाडेल्फिया ॥११॥

यत्र रिङ्गत्तरङ्गा 'डलेवर्' नदी[२६]
यत्र 'शोमेनि'[२७] संज्ञं च यूनां गृहम् ।
मेपलै[२८]श्चैष्टनड्वृक्षकैः[२९] शोभिता
राजते शोभना सा फिलाडेल्फिया ॥१२॥

संग्रहागार[३०] आस्ते यदीयोऽद्भुतो
यत्र सङ्गीतगोष्ठी समायोज्यत[३१] ।
सप्ततन्त्रीस्वरैर्झंकृता मोहकैः[३२]
राजते सा सुरम्या फिलाडेल्फिया ॥१३॥

भारतीयक्लबेनातिथीनां[३३] भृशं
स्वागतं यत्र कृत्वा मनो निर्जितम् ।
या हि 'बन्धुप्रिया'[३४] संस्कृते, साङ्ग्ले
राजते रम्यरूपा फिलाडेल्फिया ॥१४॥

यत्र चागन्तुकानां मनोरञ्जने
संनियुक्ता अभिज्ञा जना आसते ।
या पुराणांकवीथीं[३५] मुदा रक्षति
राजते सा सुयत्ना फिलाडेल्फिया ॥१५॥

यां प्रजातन्त्ररक्षाव्रती श्रीयुतो
बेञ्जमिन्फ्रेंकलिन्[३६] - संज्ञकश्चिन्तकः ।
स्वीयवासेन लब्धप्रतिष्ठां व्यधात्
राजते शोभना सा फिलाडेल्फिया ॥१६॥

या नभश्चुम्बिभिः काचशृङ्गारिभि-
र्नैकखण्डैर्वणिक्कर्मगेहैर्युता ।
या 'डलेवर्' - नदीवीचिभिर्लालिता
राजते सा सुरम्या फिलाडेल्फिया ॥१७॥

वित्तपत्रस्य कर्तुं समाशोधनं
यत्र बैंकस्य[३७] पृष्ठात्समुड्डीयते ।
'हेलिकोप्टर्'-विमानं विलम्बं हरत्
राजते सा सुदक्षा फिलाडेल्फिया ॥१८॥

यत्र यूनां मुखे शोभते यौवनं
यत्र निश्चिन्तता मानसे क्रीडति ।
यत्र घण्टा प्रजातन्त्रसद्घोषिणी[३८]
राजते शोभना सा फिलाडेल्फिया ॥१९॥

ऊरुवक्षोनितम्बश्रियां विभ्रमैः
राजमार्गे प्रधावन्ति[३९] रम्भोरवः ।
रक्षितुं स्वं शरीरं कृशं यत्र सा
राजते रम्यरूपा फिलाडेल्फिया ॥२०॥

भारतीयाञ्जनान् भारतीयाः कला
वाङ्मयं भारतीयं समाश्रित्य वै ।
यत्र संशोधनं कुर्वते शोधका
राजते सा सुधन्या फिलाडेल्फिया ॥२१॥

सिन्धु - भोग्यङ्क-विश्वेश-खृष्टाब्दके
मासि चाक्टूबरे सप्तदश्यां तिथौ ।
यत्र चागत्य सृष्टा मयेयं कृती
राजते नित्यमेषा फिलाडेल्फिया ॥२२॥

(रचनातिथिः १७.१०.१९८४, फिलाडेल्फियानगर्याम्)

# पादटिप्पणः

१. षष्ठं विश्वसंस्कृतसम्मेलनम् ।
(VIth World Sanskrit Conference)

२. प्रसिद्धः प्राच्यविद्याविशारदः प्रो० रामचन्द्र नारायण दाण्डेकरः।

३. अर्वाचीनसंस्कृतम् (६/४) दि० १५.१०.१९८४ षष्ठाब्दपूर्त्यङ्कः।

४. प्रो० एडविन गैरो, शिकागोविश्वविद्यालयस्य संस्कृताचार्यः।

५. डा० मण्डन मिश्रः, लालबहादुरशास्त्रीसंस्कृतविद्यापीठस्य प्राचार्यः किञ्च राष्ट्रियसंस्कृतसंस्थानस्य निदेशकः।

६. प्रो० अर्नेस्ट बेण्डरः, पेन्सिल्वानिया वि०वि० प्रोफेसरः (सम्मेलन-संयोजकः)

७. डा० रामकरण शर्मा, राष्ट्रियसंस्कृतसंस्थानस्य संस्थापक-निदेशकः।

८. डा० भास्कराचार्य त्रिपाठी, प्रसिद्धः संस्कृत कविः। भोपालतः सम्प्राप्तः।

९. प्रो० रेवाप्रसादद्विवेदी 'सनातनः' सुप्रसिद्धः संस्कृत कविः, कालिदाससाहित्यस्य विशिष्टो विद्वान्। वाराणसीतः समायातः।

१०. नैन्सी नेल्बेडिया फिलाडेल्फियायां विश्वविद्यालये हिन्दीकवि-घनानन्दमवलम्ब्य शोधं कुर्वाणासीत्।

११. घनानन्दः सुप्रसिद्धो रीतिकालीनो रीतिमुक्तः कविः। तस्य 'सवैया'-पद्यं तया श्रावितम् ।

१२. 'हैरिसन हॉल' इत्यत्र ।

१३. विश्वसंस्कृतकविसम्मेलनम् ।

१४. रमाकान्तशुक्ल एतस्य कविसम्मेलनस्य संयोजकत्वेन वृत आसीत् ।

१५. डा० मण्डनमिश्रेणास्य कविसम्मेलनस्य आध्यक्ष्यं विहितम् ।

१६. डा० रामकरणशर्मणेदं कविसम्मेलनमुद्घाटिम् ।

१७. प्रो० रसिक विहारी जोशि-प्रो० सत्यव्रतशास्त्रिणौ ।

१८. प्रो० रामकरणशर्म-प्रो० प्रभाकर नारायणकवठेकरौ ।

१९. कलकत्तातः सम्प्राप्ता संस्कृतनाट्यकर्त्री कवयित्री च श्रीमती रमा चौधुरी।

२०. डा० भास्कराचार्य त्रिपाठी । आदिपदेन श्री माधवदेशपाण्डेप्रभृतयः।

२१. 'भाति मे भारतं' नामकं मम काव्यम्। एकया लेखिकया अमेरिकातः प्रकाशिते समीक्षापत्रे तच्छ्रुत्वा लेखितम्—'Most Modern Poetry in the most ancient language of the world.'

२२. इस्कॉनसंस्थायाः फिलाडेल्फियास्थे केन्द्रे ।

२३. तत्र वैष्णवं भोजनमतिथिभ्य उपहृतमासीत् ।

२४. फिलाडेल्फिया-विमानपत्तनादिस्थानेषु ऐतिहासिकचित्राण्यंकितानि सन्ति।

२५. आधुनिकनगरी फिलाडेल्फिया स्वप्राचीनं रूपमपि रक्षति। तत्र अष्टादश-शताब्द्यां निर्मितानि गृहाणि अद्यापि सुरक्षितानि सन्ति—18th Century Street मध्ये ।

२६. डेलवेयर् नाम्नी नदी ।

२७. शोमेनी-ड्राइव-स्थितं युवककेन्द्रम् । 'Youth Centre, Chaumeni' यत्र मया निवासः कृतः। क्लिफ़नामा युवा तस्य केन्द्रस्य सञ्चालक आसीत् ।

२८. 'मेपल'नामकैर्वृक्षैः।

२९. 'चेस्टनट' संज्ञैः वृक्षैः ।

३०. फिलाडेल्फिया-म्यूज़ियम ।

३१. तत्र भारतीयसंगीतगोष्ठी समायोजितासीत् यत्र वयमुपस्थिता आस्मः।

३२. तत्रैकेन भारतीयकलाकारेण सितारवादनं कृतम्। एकेन चिकित्सकेन तबलावादनं कृतम् ।

३३. 'इण्डियन क्लब' नाम संस्थया अतिथीनां स्वागतार्थं 'पकौड़ा' प्रभृतीनि भारतीयव्यञ्जनानि समुपहृतानि ।

३४. 'फिलाडेल्फिया' शब्दस्यार्थोऽस्ति बन्धूनां प्रिया ।

३५. पुराणांकवीथीम् । पुराणैः-प्राचीनैः अंकैः=चिह्नैः सहितां वीथीम् । अथवा पुराणानि अष्टादश भवन्ति । तेषाम् अंकेन १८ संख्यया युतां 'Eighteenth Century Street' वीथीम् ।

३६. फिलाडेल्फिया श्रीबेञ्जामिनफ्रैंकलिनस्य कार्यस्थली आसीत् ।

३७. तत्र पी०एन०बी० नाम्नोऽधिकोषस्य (बैंकस्य) पृष्ठे एकं हेलिकोप्टरविमानं सन्नद्धं तिष्ठतिस्म। चैकसमाशोधने राजमार्गयातायातेन कदाचिद्विलम्बो भवेदिति कृत्वा आकाशमार्गात् चैकसमाशोधनं कर्तुं तस्योपयोगो भवतिस्म। अद्यत्वे 'टेलीबैंकिंग'-युगे तु मन्ये तस्य नास्ति प्रासङ्गिकता ।

३८. विश्वप्रसिद्धा बृहदाकारा घण्टा। या स्वातन्त्र्यघण्टा प्रजातन्त्रघण्टा च कथ्यते ।

३९. तत्र राजमार्गेषु श्वेतं व्यायामपरिधानं धृत्वा युवत्यो धावनं कुर्वन्ति येन तासां शरीरे मेदोवृद्धिर्न स्यात् कृशता च सुरक्षिता स्यात् । यदा चतुष्पथे रक्तप्रकाशवर्तिकावशात्ता अग्रे धावितुमक्षमा भवन्ति तदा ता एकस्मिनेव स्थाने उत्प्लुत्योत्प्लुत्य धावनस्य व्यायामं कुर्वन्ति । तदा तासां यौवनं मुखरितमिव भवति।

४०. अंकानां वामतो गतिः। विश्वेशः १, अंकाः ९, भोगिनः (सर्पाः) ८, सिन्धवः ४। १९८४ तमे खैष्टे वर्षे।

# मेघप्रबोधनम्

क्रूरहृदय मेघ ! कथं सुप्यते त्वया ?
गर्ज्यते न तर्ज्यते न वृष्यते त्वया ।
कोऽस्या अपराधोऽभूद् रोषमितो येन
मेदिन्यै जीवनं न दीयते त्वया ॥

क्रूरहृदय मेघ०

ग्लपयसि धरणीं नु हहा ! शंकसे न भोः !
कर्तव्यमकृत्वा त्वं लज्जसे न भोः !
सर्वंसहवसुन्धरा तुद्यते त्वया ॥

क्रूरहृदय मेघ०

प्रथमे ह्याषाढदिने दृष्टो न त्वम्
श्रावणेऽथ भाद्रपदे वृष्टो न त्वम्
कार्यानिहसि वद क्व खेल्यते त्वया ?

क्रूरहृदय मेघ०

वसुधाहृदयं भिन्नं पश्य कीदृशम्
खगमृगगणवैवश्यं पश्य कीदृशम् ।
अपि कर्षकदीनदशा लक्ष्यते त्वया ?

क्रूरहृदय मेघ०

आतपनिःश्वासान् हा ! धरा मोमुचीति
रारटीति चातकः पिकश्च रोरुदीति
क्रन्दनं निशम्य मौनमास्यते त्वया !

क्रूरहृदय मेघ०

पशुगण उद्विग्नमना हन्त बम्भ्रमीति
मीनगणः कासारे हन्त तात्रसीति
दुर्भिक्षं क्षाल्यते कथं न हा ! त्वया ?

क्रूरहृदय मेघ०

तप्तानां त्वं शरणं कथ्यसे मुधा
पर्जन्यादन्नसम्भवो मतो मुधा
पुनरपि यदि तप्तजगत् ताप्यते त्वया ॥

क्रूरहृदय मेघ०

त्वय्यायत्तं कृषिफलमिति ये प्राहुः
किं ते कविकुलगुरवोऽनृतमेवाहुः ?
किं तेषां कलकीर्तिर्दूष्यते त्वया !

क्रूरहृदय मेघ०

दोला नो मल्हारं नापि कज्जली
नो कर्गलनौकैवर्तकसुमण्डली ।
नो वर्षास्नानमभूत्, किं कृतं त्वया !

क्रूरहृदय मेघ०

उद्याने सम्फुल्लं नीपसुमं नो
रम्या हरितालिकातृतीयापि च नो
सर्वमिदं वीक्ष्य कथं हृष्यते त्वया ?

क्रूरहृदय मेघ०

किं तडिता सेवाव्रततो निवारितः ?
आहोस्विच्छक्रेण त्वं निलम्बितः ?
किं नातपतप्तवनं सेच्यते त्वया ?

क्रूरहृदय मेघ०

प्लावनं क्वचित्तथा क्वचित्त्वर्षणम्
उभयथापि हन्यते त्वया तु कर्षणम् !
नो कथं विनाशतो विरम्यते त्वया ॥

क्रूरहृदय मेघ०

स्वनियोगमशून्यं कुरु वर्ष सत्वरम् ।
नर्तय शितिकण्ठगणं जलद ! सत्वरम् ।
चातककुशलं न कथं पृच्छ्यते त्वया ?

क्रूरहृदय मेघ०

पादपेषु वल्लरीषु वर्ष वर्ष वर्ष
ग्रामनगरवीथिकासु वर्ष वर्ष वर्ष
नवजीवनमेतेभ्यो दीयतां त्वया ।

क्रूरहृदय मेघ०

पशुगणस्तृणानि गोचरेषु चञ्चुरीतु ।
कर्षकोऽथ कार्मिको मुदं च बाभजीतु ।
सान्त्व्यतां बलाकेयं साम्प्रतं त्वया ।

क्रूरहृदय मेघ०

अल्पय दारुणविपदं जीवखेदिनीम्
तर्पय धारासारैस्तप्तमेदिनीम् ।
अपि नीरद ! मे वचनं श्रूयते त्वया ?

क्रूरहृदय मेघ०

अधिकं त्वां प्रेरयितुं नाहमुत्सहे
निर्ह्रीकं ह्रेपयितुं नाहमुत्सहे ।
स्तोकं बहु नैव किमिति गृह्यते त्वया ?

क्रूरहृदय मेघ०

क्रूरहृदय मेघ ! कथं
कुलिशहृदय मेघ ! कथं
अयि निर्घृण मेघ ! कथं सुप्यते त्वया ?
गर्ज्यते न तर्ज्यते न वृष्यते त्वया ?

क्रूरहृदय मेघ !

(रचनातिथिः ५-१०-१९८७)

# अकालजलद !

(१)

अकालजलद ! त्वया किमिति निन्द्यमाचर्यते?
कृषीवलपरिश्रमः कथमहो त्वया नाश्यते ?
निपात्य करकाचयं परिणतेषु सस्येषु हा
त्वया किमिति तुद्यते वद पयोद ! पृथ्वीमनः ॥

(२)

निदाघतपनज्वलद्वसुधया यदाकारित-
स्तदा त्वमगमः क्वचिद्वसुमती त्वया शोषिता।
यदा च वसुधासुतैः श्रमभरैः प्रयासैर्निजै-
ररक्षि कृषिसन्ततिर्विषमहो त्वया पातितम् ॥

(३)

महाराजतशोभिनः परिणताः सुगोधूमकाः
यवाः कणिशालिनश्चणकसर्षपाश्चाहताः ।
श्रमेण परिपालिता कृषिलता त्वया मर्दिता
धिगस्तु तव जीवनं ! चरति यद्भवे वैशसम् ॥

(४)

कृषीवलगणैः समैः कृषिफलं सदा पोषितुं
वृतस्त्वमसि रक्षकस्त्वमभवस्तु हा भक्षकः !
सुकालमवलोक्य नो समभवत्तवावर्षणम्
मुधाद्य तव दुःसहा वद वदान्यता कीदृशी ॥

(५)

कृषीवलगणास्त्वया विषद! वञ्चिता लुण्ठिता-
स्तथापि कृषिदेवता भवसि कैर्गुणैर्ब्रूहि रे ।
अकारणमिदं त्वया किमिति वैरमाविष्कृतम्
कलंकितमहो कथं प्रकुरुषे स्वकीयं यशः ॥

(६)

यथासमयमस्तु ते जलद ! गर्जनं वर्षणम्
यथासमयमस्तु ते समुदयस्तथा विश्रमः ।
जगज्जनसुरञ्जनो भव न वै जगत्त्रासकः
परोपकरणव्रतं वृणु पयोद ! कल्याणदम् ॥



(रचनातिथिः १३-१५.३.१९८८)

# स्वागतं पयोद ! ते

गर्जनेन वर्षणेन ते धरा प्रमोदते ।
स्वागतं पयोद ! ते स्वागतं पयोद ! ते ॥

(१)

हे सुकालवारिमुक् ! त्वया धरा सुतर्पिता
हे पयोद ! चातकास्त्वया भृशं सुहर्षिताः
केकिनां गणस्त्वया मुदा वनेषु नर्त्यते ॥
स्वागतं पयोद ! ते स्वागतं पयोद ! ते ॥

(२)

वीतवर्षशोषकृत्[१] यदाधुना त्वमागतः
भूमनःस्थतापराशिरत्ययं द्रुतं गतः
मानसे मुदो न मान्ति दर्शनाज्जनस्य ते ॥
स्वागतं पयोद ! ते स्वागतं पयोद ! ते ॥

(३)

मार्जितास्त्रुटी[२]र्विलोक्य ते प्रमोदमेम्यहम्
हर्षितान् वनस्पतीन् विलोक्य मोदमेम्यहम्
सर्वतः प्रसन्नता जनाननेषु विद्यते ॥
स्वागतं पयोद ! ते स्वागतं पयोद ! ते ॥

---

१. १९८७ तमेशवीयेऽब्दे काले अवर्षणात् शोषहेतुः ।
२. १९८७ तमे वर्षे काले अवर्षणात्मिकास्त्रुटयस्त्वया १९८८ तमे वर्षे सुकालवर्षणेन मार्जिताः ।

(४)

नूतना सुपादपाः प्रमोदिता सुवल्लरी
उच्छलत्सुविभ्रमा तरंगितास्ति निर्झरी
पक्षिणश्च नीडनिर्मितिं द्रुतं प्रकुर्वते ॥
स्वागतं पयोद ! ते स्वागतं पयोद ! ते ॥

(५)

क्षेत्रकर्षणेन बीजवापकर्मणा द्रुतं
कर्षकैः सभार्यकैः स्वधर्मपालनं कृतं
श्रावणेऽथ भाद्रकेऽपि ते दयां भजन्तु ते ॥
स्वागतं पयोद ! ते स्वागतं पयोद ! ते ॥

(६)

अंगणेषु गेहपृष्ठकेषु वा वनान्तरे
वीथिकासु वारिपूरितासु वापि चत्वरे ।
प्रावृषोऽभिषेकमर्भका मुदा प्रकुर्वते ॥
स्वागतं पयोद ! ते स्वागतं पयोद ! ते ॥

(७)

दोलया मनोविनोदमाचरन्ति बालिका: ।
तीव्रगामिनो गृहं प्रयान्ति पश्य पान्थकाः
उत्कया बलाकया मनोरथः स्व पूर्यते ॥
स्वागतं पयोद ! ते स्वागतं पयोद ! ते ॥

(८)

'तोयदेन पूरिता मनोरथाः समे हि नो
वारिदेन दारितं सुदीर्घसंकटं हि नो'
ग्रामवासिभिश्च नागरैर्मुदाद्य कथ्यते ॥
स्वागतं पयोद ! ते स्वागतं पयोद ! ते ॥

(९)

पक्षिणश्चतुष्पदाः सरीसृपाः पयश्चराः
मोदमाप्नुवन्ति कान्तिमाप्नुवन्ति भूधराः
फुल्लितैः कदम्बकैः सुहास एष कीर्यते ॥
स्वागतं पयोद ! ते स्वागतं पयोद ! ते ॥

(१०)

क्लिन्नवस्त्रयोषितो महर्षिमानभञ्जिकाः
धारिता भुवा नवा हरीतिमत्सुशाटिका
रामणीयकं नवं च किं न वाद्य दृश्यते ?
स्वागतं पयोद ! ते स्वागतं पयोद ! ते ॥

(११)

दर्दुराः प्रमोदिताः सुहंसकाः पलायिताः
पद्मनाशगर्विताः शिलीन्ध्रकाः समुद्गताः
द्वन्द्व एव जीवनं नु ! चिन्तयाऽलमत्र ते ॥
स्वागतं पयोद ! ते स्वागतं पयोद ! ते ॥

(१२)

तावता जलेन सिञ्च वारिवाह ! मेदिनीम्
यावता न याति सा दशां स्वजीवखेदिनीम्
प्लावनं भवेत्क्वचिन्न चातिवर्षणेन ते ॥
स्वागतं पयोद ! ते स्वागतं पयोद ! ते ॥

(१३)

शस्त्रवह्नितापशामको भवेः पयोद हे !
द्वेषवह्नितापशामको भवेः पयोद हे !
शान्तिरस्तु सौख्यमस्तु सीकरैः पयोद ! ते ॥
स्वागतं पयोद ! ते स्वागतं पयोद ! ते ॥

(१४)

मोदमेतु मेदिनी प्रमोदमेतु मानवः ।
नो कदापि बाधतां भुवं कुशोषदानवः ॥
अन्नमस्तु, दुग्धमस्तु, विद्युदस्तु केन[१] ते॥
स्वागतं पयोद ! ते स्वागतं पयोद ! ते ॥



(रचनातिथिः १५-७-१९८८)

१. केन=जलेन

# नेहरुं तं स्मरामो वयं सादरम्

(१)

जंगले मंगलं येन सम्पादितं
येन संकीर्णवृत्तिस्सदा न्यकृता ।
शत्रवो येन मित्रीकृता स्वस्मितै-
र्नेहरुं तं स्मरामो वयं सादरम् ॥

(२)

व्यावृतास्याः समस्याः समाधाय यो
जागरामास देशस्य भूत्यै सदा ।
पालयामास यो देशसेवाव्रतं
नेहरुं तं स्मरामो वयं सादरम् ॥

(३)

पूजयामास नो दर्पिणो दम्भिन-
श्चिन्तयामास यो दीननृणां हितम् ।
मार्गयामास देशोन्नतेर्यस्सृतिं
नेहरुं तं स्मरामो वयं सादरम् ॥

(४)

यस्य कोपोऽपि नृणां प्रियः सम्मतो
यस्य संस्पर्शमाप्तुं नरा उत्सुकाः ।
भाषितुं येन साकं जगत्सस्पृहं
नेहरुं तं स्मरामो वयं सादरम् ॥

(५)

गूढगम्भीरचित्तोऽपि हासप्रियो
यश्च तेजो दधानोऽपि शान्तिप्रदः ।
यश्च पारम्परीणोऽपि नव्यो बभौ
नेहरुं तं स्मरामो वयं सादरम् ॥

(६)

सर्वधर्मादरः सद्गुणान्वेषणम्
शान्तिरौदार्यमाध्यात्मिकं चिन्तनम् ।
नव्यविज्ञानमार्गश्च यत्रावसन्
नेहरुं तं स्मरामो वयं सादरम् ॥

(७)

येन विश्वस्य मञ्चे समुद्घोषितो
विश्वबन्धुत्वमन्त्रो जगत्पावनः ।
शान्तिदूतश्च लोके सदा यो मतो
नेहरुं तं स्मरामो वयं सादरम् ॥

(८)

योऽलिखद् ग्रन्थरत्नानि नैकानि, यो
योजना भारतस्योन्नतेर्निर्ममे ।
देववाणी च गंगा च येनादृते
नेहरुं तं स्मरामो वयं सादरम् ॥

(९)

यस्य ताटस्थ्यनीतिः प्रसिद्धिं गता
पञ्चशीलेन यः सर्वपूज्यो बभौ ।
पाटलश्रीः प्रिया यस्य चात्यन्तिकी
नेहरुं तं स्मरामो वयं सादरम् ॥

(१०)

यः पितृव्यः प्रियो बालकानां मतो
यः प्रजातन्त्ररक्षाभटः सम्मतः ।
राजलक्ष्मीप्रियो यश्च वाणीप्रियो
नेहरुं तं स्मरामो वयं सादरम् ॥

(११)

यः कलाकाव्यसंगीतकृद्धृत्स्थितो
यः पुरातत्त्वसाहित्यवीक्षापरः ।
कालसीमा न यं म्लानतां प्रापयेत्
नेहरुं तं स्मरामो वयं सादरम् ॥

(१२)

'एतदाप्तं मया, लभ्यमेतन्मया
नाशयिष्यामि तं, स्फोटयिष्यामि तम्।'
ईदृशी नेतृवृत्तिर्न यस्य प्रिया
नेहरुं तं स्मरामो वयं सादरम् ॥

(१३)

'सन्तु सर्वत्र सर्वे सदा नन्दिताः,
युद्धदावानलो नैव लोकं दहेत् ।'
स्वप्नदर्शी य इत्थं सदाजागरीत्
नेहरुं तं स्मरामो वयं सादरम् ॥

(१४)

अद्य देशे यदौदार्यमालोक्यते
तत्र तस्यास्ति दृश्या शुभा भूमिका ।
भाति मे भारतं यस्य दिव्यैर्गुणै-
र्नेहरुं तं स्मरामो वयं सादरम् ॥

(रचनातिथिः १४-११-१९८८)

# जाबालिपुरं चल !

जाबालिपुरं चल रमाकान्त ! जाबालिपुरम् !
आकारयति त्वामभिवन्द्यं जाबालिपुरम् ।।ध्रुव०।।

शङ्करशशिलेखावारिविन्दुरखिलौघहरो
बहुवीचिविवर्तावर्तयुता नर्मदा बभौ ।
नर्मदा स्वयौवनमधिजगाम यस्मिन्स्थाने
तत्स्थानं 'भेडाघाट'-पदप्रथितं च बभौ ।।
जगदागन्तुकलोचनावलीपश्यतोहरं
स्फटिकाश्मशिलारमणीयविभाविस्तारकरम् ।
तं भेडाघट्टं निकषा यद् राराष्ट्रि सदा
तन्नगरं चल हे रमाकान्त ! जाबालिपुरम् ।।
जाबालिपुरं चल..........।।१।।

जाबालिमुनेः साधनास्थलं पूतं प्रथितम्
अर्जुनपलाशसहकारप्रभृतिपादपलसितम् ।
देशस्य कृते सर्वस्वहोतृभिः संवलितम्
आयुधनिर्मित्या भारतसैनिकबलप्रदम् ।।
दुग्धप्रदातृपशुधनपरिपालककृषकयुतम्
दुर्गावत्याः विक्रमगाथाभिः परिलसितम् ।
नरसिंहमन्दिरं धत्ते यत्कलुषापहरम्
शंकरगाथाभिर्भवति च यद्रोमाञ्चकरम्।।
जाबालिपुरं चल..........।२।।

'कृष्णायन'- कृद्द्वारिकाप्रसादमिश्रलसितम्
श्रीहीरालालजैनकृतशोधमयूखसितम् ।
हरिशंकरपरसाई - व्यंग्योक्तिविलासयुतम्
चौहानसुभद्रा-राष्ट्रगीति - गरिमप्रथितम् ।।

श्रीप्रभुदयाल-गोविन्ददास-साधनांकितम्
श्रीकृष्णाकान्त-राजेन्द्र-प्रभृतिविद्वल्लसितम् ।
रामेश्वरशुक्लाञ्चल - नवरचनाप्रभाधरं
पुष्पा-लीना-चित्रा-कर्तृत्वविकासकरम् ॥

जाबालिपुरं चल..........।३॥

योऽवन्तिसुन्दरीं परिणिनाय मुदितेन हृदा
अनुसन्दधते यं विश्वविपश्चिद्गणा मुदा ।
येन ग्रथिता कर्पूरमंजरी नाट्यकृतिः
श्रद्धासुमानि यस्मै ददाति विद्वज्जगती ।
अथ विद्धशालभञ्जिकोदयं यस्मात्प्राप्ता
यस्यास्ति काव्यमीमांसानाम्नी कृतिराप्ता ॥
रामायणमथ भारतं बालपूर्वं यस्य
मान्यं प्रबन्धषट्कं च विबुधसंसारस्य ।
यस्मिन् वाणी व्यलसन्मुदिता वारम्वारम्
तं राजशेखरं यत्स्मरति प्रियकाव्यकरम् ॥

जाबालिपुरं चल..........।४॥

चल कविसमवायं पश्य तत्र सहृदयमहितम्
मध्यप्रदेशसंस्कृताकादमीसन्निहितम् ।
रेवाप्रसाद-कमलेशदत्त-कृति-संवलितम्
बच्चूलालावस्थिनो गजलगीतैर्लसितम् ॥
श्रीश्रीनिवासरथमन्द्रघोषनवगानयुतम्
कविपुंस्कोकिलराजेन्द्रमिश्रकलगानयुतम् ।
श्रीरहसबिहारीप्रभृतिकविप्रतिभादूतम्
भास्कराचार्यसञ्चालनकौशलसम्पूतम् ।
पठ कवितां त्वमपि स्वीयां तत्र यथावसरम्
जाबालिपुरं चल रमाकान्त ! जाबालिपुरम् ॥

जाबालिपुरं चल..........।५॥

मा भूस्तेजापःक्षेपघृणितघटनाऽत्र पुरे
स्यादत्र सदा शुभसौख्यसमृद्धिरतीव पुरे।
संस्कराणां धानीयं विलसतुतरां सदा
जागर्तु मनीषा जगदुद्धारायात्र सदा ।
धत्तामिदं पुरं कलासाहितीगरिमाणम्
योगिनीमन्दिरं वितरतु जगते कल्याणम्।
प्रार्थय शुद्धेन हृदा जगदीशं सृष्टिकरम्
मोदतां वर्धतां राजतां च जाबालिपुरम् ॥

जाबालिपुरं चल..........।६॥

(रचनातिथि : २२-१२-१९८८)

# एकं सद् बहुधा विलोक्यते भारतम् !

एकं सद् बहुधा विलोक्यते भारतम् ।
बहुधा सच्चैकं विराजते भारतम् ।
एकमखण्डमभिन्नमस्ति मे भारतम् ।
रम्यमस्ति सुरवन्द्यमस्ति मे भारतम् ॥१॥

एकं सद्......।

यदि पादेऽस्य कदापि निविशते कण्टकम्
निखिलतनौ पीडनं भवति मर्मान्तकम् ।
यदि वेदना शिरसि समुदेति सदा ध्रुवं
व्यथते सकलतनौ मे निखिलं भारतम् ॥२॥

एकं सद्......।

भिन्नमस्तु भाषाभूषासु पदे पदे
भिन्नमस्तु लोकाचारेषु पदे पदे ।
भिन्नमस्तु पूजापद्धतिषु पदे पदे
आत्मन्येकमभिन्नमस्ति मे भारतम् ॥३॥

एकं सद्......।

कोटिकोटिजनताचेतस्तु विराजितम् ।
नित्यनवीनोत्सवपर्वावलि - राजितम् ।
विश्वबन्धुता - जिजीविषा - विस्तारकम् ।
जगतो हृदयं जयति जगति मे भारतम् ॥४॥

एकं सद्......।

वीक्ष्य समृद्धिं यन्त्रोद्योगानां भृशम् ।
वीक्ष्यं समृद्धिं कृषिसम्पत्त्या वा भृशम् ।
वीक्ष्य समृद्धिं ज्ञानकलादीनां भृशम्,
मोमुदीति मनसा निखिलं मे भारतम् ॥५॥

एकं सद्......।

यदा व्योम्नि सागरे शैलशृंगेषु वा,
विकटकर्दमे मरौ विजनविपिनेषु वा ।

सावधानभटनिवहो रक्षति जनगणं
गर्वमेति विपुलं निखिलं मे भारतम् ॥६॥

एकं सद्......।

क्वापि पतति संकटे प्रजातन्त्रं यदा,
अवरुध्यते जनानां कण्ठो वा यदा ।
सर्वातंकभयाशंकाः परिहृत्य वै,
गर्जति सकलं समुज्ज्वलं मे भारतम् ॥७॥

एकं सद्......।

क्वापि भवति कुलवधूदाहपापं यदा,
रक्ष्यभक्षणं दुर्बलघातो वा यदा ।
क्वापि भवति यदि हिंसा क्रीडा दुःखदा,
रोरुदीति करुणं सकलं मे भारतम् ॥८॥

एकं सद्......।

आशां वृणुते नैव निराशां भारतम्,
सद्गुणमेव स्मरति न दोषं भारतम् ।
कलहविवादान् शमयति लोके भारतम्,
शान्तिं जगति तनोति शुभं मे भारतम् ॥९॥

एकं सद्......।

यत्र यत्र सत्यं ऋजुता समुदारता,
यत्र यत्र करुणा श्रमपरता वीरता ।
यत्राहिंसा - त्याग - विवेक - सहिष्णुताः,
तत्र तत्र विलसति सुतरां मे भारतम् ॥१०॥

एकं सद्......।

केवलशासनतन्त्रं नो मे भारतम्,
केवलमवनी गृहसम्पन्नो भारतम् ।
कोटिकाटिजनतपःश्रमौ मे भारतम्,
संगच्छध्वं संवदध्वमिति भारतम् ॥११॥

एकं सद्....।

(रचनातिथिः ३१-१-१९८९)

# उत्तरमङ्गलम्

मित्र ! लब्धा मया ते शुभाः कामना-
स्तत्कृतेऽहं कृतज्ञो भवन् भूरिशः ।
स्वास्थ्यदं मोददं कीर्तिदं सौख्यदं
नूतनं वत्सरं ते शुभं कामये ॥१॥

यत्र गेहे वसेर्यत्र वीथ्यां वसे-
र्ग्रामके वा नगर्यां वसेस्त्वं सखे ।
वैमनस्याग्निरुग्रो न तत्र ज्वले-
न्नूतने वत्सरे ते भवेन्मङ्गलम् ॥२॥

येन मार्गेण यात्रा भवेत्तावकी
तत्र पुष्पाणि नित्यं हसेयुः सखे !
कण्टकं न स्पृशेत्ते पदं कोमलं
नूतने वत्सरे ते भवेन्मङ्गलम् ॥३॥

कुत्र चिन्तात्र लोके न संदृश्यते
कुत्र वा दुःखशोकादयो न स्थिताः?
त्वत्कृते किन्तु तिष्ठन्त्वदृश्या इमे
नूतने वत्सरे ते भवेन्मङ्गलम् ॥४॥

यत्र देशेऽस्ति वासः सखे तावक-
स्तत्र कर्त्तव्यशून्यो न कश्चिद्भवेत् ।
स्युः प्रजातन्त्ररक्षापरास्तन्नरा
नूतने वत्सरे ते भवेन्मङ्गलम् ॥५॥

उष्यते यत्र राष्ट्रे त्वयाहर्निशं
तत्र कार्यं चिकीर्षुर्यदि स्याज्जनः ।
प्राप्नुयात् कार्यवृत्तिं तदा स ध्रुवं
नूतने वत्सरे ते भवेन्मङ्गलम् ॥६॥

ज्ञातमस्त्येव मे, त्वं हि सामाजिकं
वीक्ष्य वैषम्यमाप्नोषि तापं सखे !
आयतावीदृशी ते दशा नो भवे-
न्नूतने वत्सरे ते भवेन्मङ्गलम् ॥७॥

वृत्तपत्रेषु नित्यं बलात्कारिणां
निन्द्यपैशाचकृत्यानि न त्वं पठेः !
नापि हत्यापहारादि-गाथा नवा
नूतने वत्सरे ते भवेन्मङ्गलम् ॥८॥

प्रोन्नतिर्दुजनानां सतां दुर्गति-
र्वृत्तिकष्टार्दितानां च यूनां गतिः ।
नों दुनोतु त्वदीयं द्रुतं मानसं
नूतने वत्सरे ते भवेन्मङ्गलम् ॥९॥

नैव वध्वाः न पत्युर्न वा कस्यचि-
ज्जीवितप्राणिनो दाहमाकर्णयेः !
नैव दारिद्र्यपीडा जनान् बाधये-
न्नूतने वत्सरे ते भवेन्मङ्गलम् ॥१०॥

लोलुपा नायकास्सन्तु देशे नहि
स्वाधिकारात्प्रमता न चापि प्रजाः ।
स्वैरिणो नो भवेयुस्तथा शासका
नूतने वत्सरे ते भवेन्मङ्गलम् ॥११॥

मुग्धलोकं सखे ! वञ्चनाचुञ्चवो
गृध्रगोमायवो वञ्चयेयुर्नहि ।
क्षेमदे शान्तिदे हर्षदे श्रीप्रदे
नूतने वत्सरे ते भवेन्मङ्गलम् ॥१२॥

देववाणीमुपेक्ष्य प्रभाभासुरां
ये ऽवनत्या गता अन्धकूपे नराः ।
तेऽपि गृह्णन्तु शिक्षां सखे ! सत्वरं
नूतने वत्सरे ते भवेन्मङ्गलम् ॥१३॥

दैन्यहीनं दयापूर्णमाशान्वितं
जीवनं कर्मठं ते सदा राजताम् ।
त्वं सुखीः स्याः, लभस्व प्रियं कांक्षितं
नूतने वत्सरे ते भवेन्मङ्गलम् ॥१४॥

ये जना आसते ते कुटुम्बे सखे !
ते प्रसन्नास्समर्था लसेयुस्सदा ।
विश्वमेकं कुटुम्बं च ते राजताम्
नूतने वत्सरे ते भवेन्मङ्गलम् ॥१५॥

अत्र लोके सतो रक्षितुं सर्वदा
दुष्कृतो हर्तुमुत्साहिनस्स्युर्नराः ।
निर्मितिर्नूतना स्यात्सदा शंकरी
नूतने वत्सरे ते भवेन्मङ्गलम् ॥१६॥

नैव याचे धनं, स्वर्गमेवाथवै-
काकिनस्ते न सौख्यं सखे! कामये ।
सन्तु सर्वत्र सर्वे सदा नन्दिता
नूतने वत्सरे ते भवेन्मङ्गलम् ॥१७॥

सन्तु बाला युवानोऽथ वृद्धास्समे
निर्भयाः कर्मठा लोकसेवापराः ।
आदरः कस्यचित्खण्डितो नो भवे-
न्नूतने वत्सरे ते भवेन्मङ्गलम् ॥१८॥

सत्यनिष्ठा जयेल्लेखनी निर्भया
निर्भया वाग् जयेल्लोकसंरक्षिणी ।
साधुभावस्तथा ज्ञानपूतो जये-
न्नूतने वत्सरे ते भवेन्मङ्गलम् ॥१९॥

आर्तरक्षार्थमस्त्राणि शस्त्राणि वै
सन्तु, नैव प्रहर्तुं तथानागसि ।
कण्टकानां च लोकस्य लोपो भवे-
न्नूतने वत्सरे ते भवेन्मङ्गलम् ॥२०॥

येषु चित्तेषु दावानलो भीषणो
द्वेषभावस्य जागर्ति धूधूत्करः ।
जागृयात्तेषु वासन्तिकी श्रीः शुभा
नूतने वत्सरे ते भवेन्मङ्गलम् ॥२१॥

नूतना नूतना येऽपराधाः खलै-
र्नित्यमाविष्क्रियन्ते जगद् बाधितुम् ।
ते समुन्मूलिताः स्युः समाजाद् द्रुतं
नूतने वत्सरे ते भवेन्मङ्गलम् ॥२२॥

वारिवाहः सुकाले समागच्छतात्
सन्तु गावश्च पुष्टाः सवत्साः समाः।
शं स्वकार्येषु लग्नाः समे प्राप्नुयु-
र्नूतने वत्सरे ते भवेन्मङ्गलम् ॥२३॥

क्षेत्रकेष्वन्नमुत्पादितं स्याद्बहू-
द्योगशालास्वथोत्पाद उच्चो भवेत् ।
सन्तु सत्यश्रमाभ्यां समाः सिद्धयो
नूतने वत्सरे ते भवेन्मङ्गलम् ॥२४॥

नैव पश्येदभद्रं नरश्चक्षुषा
नैव चाकर्णयेद्वाप्यभद्रं क्वचित् ।
नैव वाचा भणेद्वाक्यमुद्वेजकं
नूतने वत्सरे ते भवेन्मङ्गलम् ॥२५॥

स्वस्थपुष्टं समेषां शरीरं लसे-
न्मानसं शैवसङ्कल्पपूतं भवेत् ।
सच्चिदानन्द आत्मा स्वरूपं भजे-
न्नूतने वत्सरे ते भवेन्मङ्गलम् ॥२६॥

वाचि विद्या, करे कर्म, दृष्टौ दया
पादयोश्च प्रकृष्टा गती राजतम् ।
सुप्रवृत्तेन्द्रियैस्तोषमीयुर्जना
नूतने वत्सरे ते भवेन्मङ्गलम् ॥२७॥

ये बुभुक्षाहता वस्त्रहीनाश्च ये
सन्ति पादातमार्गे शयानाश्च ये ।
अन्नवस्त्राश्रयान् प्राप्नुयुस्ते द्रुतं
नूतने वत्सरे ते भवेन्मङ्गलम् ॥२८॥

धर्मभाषाविवादा लभेरन् शमं
दुष्कृतिर्लुप्यताम् सत्कृतिर्वधताम् ।
नित्यमौदार्यभावो जयेत्क्षुद्रताम्
नूतने वत्सरे ते भवेन्मङ्गलम् ॥२९॥

आयधो व्याधयोऽकालमृत्युस्तथा
पीडयेयुर्न लोकं श्रमाराधकम् ।
कर्म कुर्वञ्छताब्दं नरो जीवता-
न्नूतने वत्सरे ते भवेन्मङ्गलम् ॥३०॥

यत्र साहित्य-संगीत-पूजा भवेत्
सत्कलाशिल्पशास्त्रार्चना वा भवेत् ।
तत्र विघ्नो न कश्चित्समुत्पद्यताम्
नूतने वत्सरे ते भवेन्मङ्गलम् ॥३१॥

सात्त्विका राजसास्तामसाः प्राणिनोऽ
न्योन्यमाश्रित्य कल्याणिनस्स्युस्सदा।
वाचि चित्ते च कार्ये सदेकं वसे-
न्नूतने वत्सरे ते भवेन्मङ्गलम् ॥३२॥

प्रेमभङ्गो न कस्यापि लोके भवेत्
प्रेमिणो विप्रयुक्ता मिलेयुर्मुदा ।
स्युः स्मितास्याः समे फुल्लपद्मोपमा
नूतने वत्सरे ते भवेन्मङ्गलम् ॥३३॥

पीडिता येऽप्यभावैर्मनःक्लेशिभि-
स्ते जयेयुः समस्तानभावान्नराः ।
निष्फला नैव कस्यापि कांक्षा भवे-
न्नूतने वत्सरे ते भवेन्मङ्गलम् ॥३४॥

शैशवं लालितं वार्धकं पूजितं
यौवनं भोगतृप्तं हसेत्सर्वदा ।
त्याग-भोगौ भवेतां सखायौ सदा
नूतने वत्सरे ते भवेन्मङ्गलम् ॥३५॥

येऽपि चिन्तासहस्त्रैः परीताः जनाः
सन्ति पीताननाः लुप्तहासस्मिताः ।
सन्तु रक्ताननाः पूर्णकामाश्च ते
नूतने वत्सरे ते भवेन्मङ्गलम् ॥३६॥

जीवनं विश्वसम्पद् बुधैरुच्यते
तच्च विश्वस्य सेवार्थमेवार्प्यताम् ।
सद्विवेकः क्रियात्तस्य रक्षां सदा
नूतने वत्सरे ते भवेन्मङ्गलम् ॥३७॥

पर्वतानां वनानां नदीस्त्रोतसां
निर्झराणामृतूनां दिशां प्राणिनाम् ।
वारिधीनां च चेतः सदा प्रीयताम्
नूतने वत्सरे ते भवेन्मङ्गलम् ॥३८॥

खे जले कौ च वायौ तथा तेजसि
स्त्रग्विणी शान्तिराप्नोतु नित्यं जयम् ।
क्रान्तिरेयात्परं रक्तपातं विना
नूतने वत्सरे ते भवेन्मङ्गलम् ॥३९॥

तावको देश आस्तां सदा रक्षित-
स्तावकं विश्वमास्तां सदा रक्षितम् ।
तावकी कीर्तिरास्तां सदा रक्षिता
नूतने वत्सरे ते भवेन्मङ्गलम् ॥४०॥

स्वाभिमानोऽस्तु ते सर्वदाः रक्षित-
स्तावकी स्यात्प्रतिज्ञा सदा रक्षिता ।
तावकं स्यात्तपो रक्षितं सर्वतो
नूतने वत्सरे ते भवेन्मङ्गलम् ॥४१॥

त्वं हि विश्वेश्वरं विश्व आलोकये-
भूर्भुवः स्वः प्रसन्ना भवेयुश्च ते ।
प्रीयतां ते रमाकान्त आजीवनं
नूतने वत्सरे ते भवेन्मङ्गलम् ॥४२॥

कामना मे वशे पूरणं तद्वशे[1]
ईह आशायुतः कामनापूरणम् ।
शारदाया रमायाः प्रसादोऽस्तु ते
नूतने वत्सरे ते भवेन्मङ्गलम् ॥४३॥

नूतनं वत्सरं वीक्ष्य सम्प्रेषिता
यैरनेकैः सुहृद्भिः शुभाः कामनाः ।
त्वद्दलेनैव तेषां कृतेऽपि ब्रुवे
'नूतने वत्सरे ते भवेन्मङ्गलम्' ॥४४॥

यन्मया नोदितं यच्च काम्यं त्वया
यच्च पथ्यं भवेन्मङ्गलाधायकम् ।
तत्सुलभ्यं भवेत्त्वत्कृते सत्वरम्
नूतने वत्सरे ते भवेन्मङ्गलम् ॥४५॥

वक्तुमास्ते सखे ! भूरि मन्मानसे
किन्तु वीक्ष्य त्वदीयामतिव्यापृतिम् ।
पत्रमत्रैव सम्पूर्णतां प्रापये
नूतने वत्सरे ते भवेन्मङ्गलम् ॥४६॥



(रचनातिथिः १५-१-१९९०)

१. तस्य=ईश्वरस्य वशे

# वदत नेतारो मनाक्

किं कुरुथ किं वा करिष्यथ वदत नेतारो मनाक् ।
किं मनसि वो वर्तते भो भणत नेतारो मनाक् ॥१॥ध्रु०॥

'अद्य युष्माकं प्रयासैर्देशगौरवमेधते ।'
कश्चिदपि वक्तुं किमिच्छति चिन्तयध्वं रे मनाक् ॥२॥

धर्मजातिग्रामभाषावर्णभेदोद्दीपनैः ।
कीदृशीं कृशरां पचध्वे वदत नेतारो मनाक् ॥३॥

जनमनस्सु द्वेषवह्निर्वः प्रयासैर्ज्वालितः ।
किमुचितं भवदीयकृत्यं वदत नेतारो मनाक् ॥४॥

छिन्नमुद्यानं भवद्भिः पुष्पगन्धाढ्यं महत् ।
दूयते न च मानसं वो हन्त ! वदत नेतारो मनाक् ॥५॥

नाशितं जनजीवनं पितृसद्मतां नीताः पुरः ।
कारिताः शालाश्च काराः किं न लज्जध्वे मनाक् ॥६॥

रेलयानानां निरसनैर्निग्रहैश्च निरागसाम् ।
किं भवति किं वा भविष्यति ? वदत नेतारो मनाक् ॥७॥

यैर्न दीपाली व्यलोकि स्वादितं न च यौवनम् ।
वैशसात् तेषां न शंकध्वे कथं क्रूरा मनाक् ॥८॥

यौवनं प्रज्वाल्यते, प्रतिभा सतामवहेल्यते ।
जनमतं समुपेक्ष्यते, भद्रा बिभिथ चेतसि मनाक् ॥९॥

नैव काशी नैव मथुरा नाप्ययोध्या नो पुरी ।
नैव चोज्जयिनी विधत्ते वो भयं चेतसि मनक् ॥१०॥

नृषु नृषु च विद्वेषभावो रोपितो निजभाषणैः ।
येऽप्यवाच्या भवदुदन्ता नोद्गिरति तान् कापि वाक् ॥११॥

सौमनस्याधारभूतां भरतवसुधां नित्यशः ।
कालकूटमयीं कुरुध्वे, किं न शंकध्वे मनाक् ॥१२॥

नित्यमेव क्रूरतानृतछद्मभेदाराधकाः ।
कां गतिं यूय गमिष्यथ वदत नेतारो मनाक् ॥१३॥

'स्फोटयथ शासथ-नियमतः खण्डयथ राष्ट्रैकताम् ।
कुत्र गच्छथ कुत्र यास्यथ ? वदत नेतारो मनाक् ॥१४॥

यद्यदाचरथ स्वदेशीये जनेऽत्र प्रत्यहम् ।
किं तदाचरितं कदाचित् आंग्लकुटिलैरपि मनाक् ॥१५॥

देशसेवां कर्तुमागच्छथ कुरुथ यादृच्छिकम् ।
व्यवहृतिः केयं स्फुरति वश्चिन्तयध्वं रे मनाक् ॥१६॥

निर्धना निर्धनतरास्तैस्तैरभावैः क्लेशिताः ।
आढ्यता नवनूतना वो वन्दनीया किं मनाक् ॥१७॥

क्लिश्यते दुष्यति च शुष्यति भिक्षते रोदिति जनः ।
अत्थ पिबथ स्वपिथ हृष्यथ! किं न लज्जध्वे मनाक् ॥१८॥

वीक्ष्य देशे कुव्यवस्थां वृत्तिकष्टं हिंसनम् ।
निस्त्रपाः क्रन्दथ हसथ वा ? वदत नेतारो मनाक् ॥१९॥

वस्त्रराहित्यं कुपोषणमत्र वापि महार्घता ।
नित्यमग्रे किमिति धावति ? वदत नेतारो मनाक् ॥२०॥

नो कृषध्वे किन्तु कृषकाणां भवन्तो नायकाः ।
वीक्ष्य युष्मान् किं प्रसीदति कोऽपि सन्ना भुवि मनाक् ॥२१॥

अर्थयन्तारोऽपि यूयं धर्मगुरुगुरवस्तथा ।
काममोक्षविचारका अपि ! बिभिथ रे चेतसि मनाक् ॥२२॥

उपचिताः खलु यैर्भवन्तस्ते भवद्भिर्लुण्ठिताः ।
रे प्रजातन्त्रस्य हन्तारो बिभिथ लोकान्मनाक् ॥२३॥

लुञ्चिता न्यायालया जनता वराकी लुञ्चिता ।
किमपरं भो लुञ्चयिष्यथ वदत नेतारो मनाक् ॥२४॥

अहह ! सज्जनता भवद्भिर्लुण्ठिता व्यापादिता ! ।
लोकयथ भो लोकयथ कीर्तिं स्व नेतारो मनाक् ॥२५॥

देशसेवा लुण्ठनापर्यायभूता वो मते ।
किं न पश्यथ नैजचरितं ? वदत नेतारो मनाक् ॥२६॥

विश्ववन्द्यं शान्तिदूतं चैकनीडं यत्सताम् ।
भारतं तत्कथं लुञ्चथ, वदत नेतारो मनाक् ॥२७॥

भङ्क्थ चित्तं भङ्क्थ वित्तं भङ्क्थ विश्वासं नृणाम् ।
किं न नैजं भङ्क्थ गर्द्धं वदत नेतारो मनाक् ॥२८॥

चोरयथ जनसौमनस्यं चोरयथ जनजीवनम् ।
चोरयिष्यध्वे स्वकीयं भ्रष्टकृत्यं किं मनाक् ॥२९॥

किन्तु परवञ्चनविधिज्ञा मातृभूपरितापकाः ।
नरकरचनापाटवं वो नो दुनोति मनो मनाक् ॥३०॥

यत्र यत्रालोक्यते शान्तिर्भवद्भी रक्षिता ।
उप्यते कलहस्य बीजं तत्र, जिह्रीथ न मनाक् ॥३१॥

गिरथ कोषं गिरथ पदवीं गिरथ सर्वं सुविधया ।
किं स्वतृष्णामपि गरिष्यथ ? वदत नेतारो मनाक् ॥३२॥

तनुथ देशे सङ्कटं कलहं तथातङ्कं स्वतः ।
किं न तनुथ स्वीयचेतसि राष्ट्रभक्तिं रे मनाक् ॥३३॥

चिन्तयथ नित्यं स्वकीयं हितमपरिमितमेव रे ।
चिन्तयध्वं देशहितमपि लोलुपा यूयं मनाक् ॥३४॥

युष्मदीयैर्नित्यकृत्यै राष्ट्रदेवी लज्जिता ।
निस्त्रपा जीवथ न मज्जथ चुलुकवारिणि रे मनाक् ॥३५॥

हिंसया अनृतेन पैशुन्येन भवतां जीविका ।
कोऽपि सम्बन्धोऽस्ति किं सत्यश्रमाभ्यां वो मनाक् ॥३६॥

सन्ति ये लालाटिका आस्थाननलिनीका बकाः ।
कुत्र युष्मान् पातयेयुश्चिन्तयध्वं रे मनाक् ॥३७॥

पादयोः प्रणिपत्य घोणाघर्षणं कृत्वा मुहुः ।
याचितं यन्मे मतं तस्यादरं रक्षत मनाक् ॥३८॥

दूरदर्शनतन्त्रतो लब्ध्वा विभुत्वं प्रत्यहम् ।
भाष्यते यदनर्गलं रे वित्थ तस्यार्थं मनाक् ॥३९॥

मनसि वचसि च कर्मणि प्रविरुद्ध्यते यैः प्रतिपलम् ।
सन्ति सन्तो वै कियन्तो वोऽतिरिच्य वदत मनाक् ॥४०॥

नैककविभिर्नवपुराणैर्यस्य महिमा गीयते ।
भारतं तत्किं न रक्षथ, वदत नेतारो मनाक् ॥४१॥

यस्य रक्षायै भटा उत्साहिनः खे भुवि जले ।
यूयमपि तद्देशरक्षार्थं कुरुत यत्नान् मनाक् ॥४२॥

येऽप्यपश्यन्नैकतायामेकतां भारतभुवि ।
भवत तेष्वपि भो कृपालव आत्मपूर्वजनृषु मनाक् ॥४३॥

'यातु देशो ह्यन्धकूपे रक्षितं स्यान्मे मतम् ।'
इति विचारपरम्परां स्वां त्यजत नेतारो मनाक् ॥४४॥

चिनुथ यूयं पूर्वजानां दुर्गुणानेव, क्षणम् ।
सद्गुणानपि किन्तु तेषां चिनुथ नेतारो मनाक् ॥४५॥

किं तुदध्वे राष्ट्रदेवं किं तुदथ देशावनिम् ।
संस्कृतिं नः किं तुदध्वे वदत नेतारो मनाक् ॥४६॥

किं कृतघ्नैर्लप्स्यते कीर्तिर्यशो वा निस्त्रपैः ।
मनसि चिन्तयथ क्वचिद् एकान्त आसीना मनाक् ॥४७॥

शासनासन्दीमवाप्य व्रजत नो गर्वं क्षणम् ।
आगते विपरीतकाले कोऽपि रक्षति किं मनाक् ॥४८॥

ये समागच्छन्ति भङ्क्तुं वोऽभिमानं द्वारि वः ।
किं नु शक्ष्यथ रोद्धुमेतान् ? वदत नेतारो मनाक् ॥४९॥

किरथ जनसम्मर्दं निरागसमात्मनोऽहङ्कारतः ।
किमिति तच्छक्तिं करिष्यथ वदत नेतारो मनाक् ॥५०॥

ध्वसितुं मे भारतं यूयं स्थिता यदि तत्पराः ।
निश्चितं यूयं विनंक्ष्यथ, सावधाना रे मनाक् ॥५१॥

प्राक्तना नेतार आसंस्त्यागशीलाः प्रायशः ।
अद्यतननेतार आध्वे तत्सदृक्षाः किं मनाक् ॥५२॥

ते मृता अपि पूजनीया यैर्हि देशः सेवितः ।
जीविता अपि किन्तु यूयं पूजनीयाः किं मनाक् ॥५३॥

भारभूता मातृभूमेर्यूयमेतन्मे मतम् ।
अत्र किं ब्रूते मनो वो वदत नेतारो मनाक् ॥५४॥

अद्य युष्माकं सुकृत्यैर्नित्यनूतनशोभनैः ।
लोक्यते यद्दिग्दिगन्तं तद्यशः पश्यत मनाक् ॥५५॥

ये कविम्मन्या यशो वो दूषयन्ति धिगस्तु तान् ।
न्याय्यमार्गान्न स्वकीयात् प्रविचलत धीरा मनाक् ॥५६॥

उपकृतं बहु तत्र किं कथ्येतैं जीवत रे चिरम् ।
कुत्र वो दिव्यं यशः स्वल्पाक्षरा क्व च मेऽत्र वाक् ॥५७॥

(रचनातिथिः २९-१०-१९९०)

# किं जीवनं ते !

मनसि चिन्तय सखे ! किं जीवनं ते !
रहसि शीलय सखे ! किं जीवनं ते !

न वा स्वार्थः परार्थो नापि बन्धो !
त्वया चेत्साध्यते, किं ज़ीवनं ते ! ॥१॥

न साहित्यं, न संगीतं, कला वा
न रासिक्यं च ते, किं जीवनं ते ! ॥२॥

न दाक्षिण्यं, न सौशील्यं, न कीर्तिः
न सेवा, नो दया, किं जीवनं ते ! ॥३॥

विपदि धैर्यं, तथाभ्युदये क्षमा नो
न वा युधि विक्रमः, किं जीवनं ते ! ॥४॥

गुरोः पित्रोर्न चरणा वन्दिताश्चेत्
अहंकारात्त्वया, किं जीवनं ते ! ॥५॥

न कश्चित्प्रेमबन्धे त्वामबध्नात्
वृथाजीविन् सखे ! किं जीवनं ते ! ॥६॥

त्वया यदि शासनासन्दीमवाप्य
न लोको रंजितः, किं जीवनं ते ! ॥७॥

अहो दैनन्दिनी मतयाचना ते
वनीपक नेतृवर ! किं जीवनं ते ! ॥८॥

न निःश्वसितं, न रुदितं, मूर्च्छितं नो
प्रियाविरहे त्वया, किं जीवनं ते ! ॥९॥

वियोगे ते जनो नोऽपि खिन्नः
न योगे प्रीतिमान्, किं जीवनं ते ! ॥१०॥

मनोभावो न निर्द्वन्द्वं प्रकटितः
कपटचारिंस्त्वया, किं जीवनं ते ! ॥११॥

विषामृतयोर्विवेकं नैव कर्तुम्
त्वमीशश्चेत्तदा किं जीवनं ते ! ॥१२॥

न दुष्टास्तर्जिताः स्वीयेन महसा
न सन्तो मानिताः, किं जीवनं ते ! ॥१३॥

करालः काल इव नाभासि चेत्त्वम्
कुकृत्यानां कृते, किं जीवनं ते ! ॥१४॥

त्वया स्वान्तःसुखार्थं देववाणी
न पठिता, न श्रुता, किं जीवनं ते ! ॥१५॥

प्रभुः कर्ता च भर्ता चैव हर्ता
न चेदाराधितः, किं जीवनं ते ! ॥१६॥

निपीतं नैव मधु प्रेम्णः कदाचित्
विरस मृल्लोष्ठ रे! किं जीवनं ते ! ॥१७॥

न रसिता रसवशात्त्वत्पार्श्वमाप्ता
रहसि काचित्त्वया, किं जीवनं ते ! ॥१८॥

वृथा चन्द्रो वृथा मधुयामिनीयम्
न पार्श्वे ते प्रिया, किं जीवनं ते ! ॥१९॥

स्वदेशः सेवितो न प्राणपणतः
विकत्थन धूर्त रे, किं जीवनं ते ! ॥२०॥

मुखे मधु मे मनसि ते कालकूटः
तृणावृत कूप रे ! किं जीवनं ते ! ॥२१॥

कृतघ्नत्वं कदाचारः पिशुनता
इमे त्वद्बान्धवाः, किं जीवनं ते ! ॥२२॥

स्वयं नष्टः परान्नाशयसि नित्यम्
व्यसनशतशालिनः किं जीवनं ते ! ॥२३॥

क्षणे रुष्टः क्षणे तुष्टः सखे ! त्वम्
अहो चलचित्त रे ! किं जीवनं ते ! ॥२४॥

मुखे ते मक्षिकाः कुर्वन्ति भिन्-भिन्
न चोड्डाययसि रे ! किं जीवनं ते ! ॥२५॥

सुरक्षितमस्ति नो पदमपि पलार्थम्
अहो मन्त्रिप्रवर ! किं जीवनं ते ! ॥२६॥

प्रदर्शन - गालिका - कार्यावरोधैः
अहो प्राचार्यवर ! किं जीवनं ते ! ॥२७॥

प्रकृत्यंके न ते क्रीडा बभूव
सदा हर्म्यस्थ रे ! किं जीवनं ते ! ॥२८॥

न दुग्धं माहिषं व्यायामिनस्ते
(पयो गव्यं न चेद् व्यायामिनस्ते)
सुलभमास्तेऽन्वहं ! किं जीवनं ते ! ॥२९॥

न चेत् पार्श्वे सखे ते स्वास्थ्यवित्तम्
धनैरेतैरलं, किं जीवनं ते ! ॥३०॥

उपायैस्तैश्च तैर्धृतमपि मनस्ते
प्रियां नोपैति चेत् किं जीवनं ते ! ॥३१॥

उपालम्भो न चानुनयोऽपि तुभ्यं
अहो प्रणयिन् युवक! किं जीवनं ते ! ॥३२॥

तवागमने तथा गमने न चर्चा
वराक प्राघुणिक ! किं जीवनं ते ! ॥३३॥

परोक्षे शत्रुभिर्मित्रैस्तटस्थैः
न चेच्छ्लाघ्योऽसि रे, किं जीवनं ते ! ॥३४॥

अयं श्रोता न बोधति भाषणं ते
अनर्गलजल्पिनः किं जीवनं ते ! ॥३५॥

न दीनाः सेविताः शुद्धेन मनसा
कुनेतॄन् ! सेवसे, किं जीवनं ते ! ॥३६॥

न माता जन्मभूर्बन्धो ! मता चेत्
किमेतेनायुषा, किं जीवनं ते ! ॥३७॥

न दृष्टं भारतं स्निग्धेन मनसा ।
अहो विश्वभ्रमिन् ! किं जीवनं ते ! ॥३८॥

कृपेशस्याशिषो यदि वा गुरूणाम् ।
न लब्धा जीवने, किं जीवनं ते ! ॥३९॥

त्वयार्वाचीनसंस्कृतमपि न पठितम् ?
न दूर्वालोकिता ? किं जीवनं ते ! ॥४०॥

रमाकान्तो ऽभिराजो वा रथो वा ।
श्रुतो यदि न त्वया, किं जीवनं ते ! ॥४१॥

(रचनातिथिः २९-३-१९९१)

# ब्रूहि जगन्नाथस्वामिन् !

(१)

किं भवति जगति ते ब्रूहि जगन्नाथस्वामिन् !
किं वा भवितान्यद् ब्रूहि जगन्नाथस्वामिन् !

(२)

माला भूता व्याली जीवनलीलान्तकरी
प्रणतिर्भूता प्रहृतिर्जनविश्वासान्तकरी
कुसुमानि कुर्वते कालदूततां निःशंकम्
अनृतं सत्यं तर्जयति जगन्नाथस्वामिन् !
किं भवति जगति ते ब्रूहि जगन्नाथस्वामिन् !

(३)

ये शुभ्रकञ्चुका अवलोक्यन्ते नेतारः
प्रायशः प्रजातन्त्रस्य सन्ति ते हन्तारः
पूजादीपा गृहदाहकारिणो दीप्यन्ते
रक्षकाः सन्ति भक्षका जगन्नाथस्वामिन् ।
किं भवति जगति ते ब्रूहि जगन्नाथस्वामिन् !

(४)

जीवनं विश्वसम्पद्बुधजनैः पुरा कथितं
दृश्यते भीषितं पदे पदे मथितं क्वथितम्
अवहेल्यन्ते सज्जनाः दुर्जनैः पदे-पदे
दूयते मनस्ते किं न जगन्नाथस्वामिन् ?
किं भवति जगति ते ब्रूहि जगन्नाथस्वामिन् !

(५)

या विश्वबन्धुता साभिमानमुद्घुष्टासीत्
महिमानमहिंसा या च जगति भजमानासीत्
यः सत्यपरिश्रमजयो गीयते स्मास्माभिः.
क्वासौ विलीयते ब्रूहि जगन्नाथस्वामिन् !
किं भवति जगति ते ब्रूहि जगन्नाथस्वामिन् !

(६)

दीनाश्च नाद्य नारायणतां गमिता लोके
नार्यश्च नैव पूज्यन्ते तव भक्तैर्लोके
किं किं दर्शयसि प्रभो जगद्बीभत्सतां
कुरु कृपां सपदि संसृतौ जगन्नाथस्वामिन् !
किं भवति जगति ते ब्रूहि जगन्नाथस्वामिन् !

(७)

अमृतं विषायते, भारायते तथा ज्ञानं
वरदानं शापायते तमिस्रायते दिनम्
स्रोतो मरुभूमीयति सेवा लुण्ठना मता
वार्ता युद्धीयति कथं जगन्नाथस्वामिन् !
किं भवति जगति ते ब्रूहि जगन्नाथस्वामिन् !

(८)

हे विश्वरूप ! नैजं रूपं किं नो पश्यसि
हे दीनदयालो ! दीनजनान् किं नो पश्यसि ?
हे सर्वव्यापक ! किं सहसे सर्वस्य शुचं
कुरु नः सत्पथगानाशु जगन्नाथस्वामिन् !
किं भवति जगति ते ब्रूहि जगन्नाथस्वामिन् !

(रचनातिथिः ६-६-१९९१)

# वन्दनीयास्ते !

इयं स्वर्गाधिका मे मातृभूमिर्वन्दनीयास्ते ।
परं यास्या दशाद्यत्वे, कथय किं वन्दनीयास्ते ? ॥१॥

चतुर्दिक् दृश्यते यासौ प्रगतिरभिनन्दनीयास्ते ।
चतुर्दिक् दुःस्थितिर्यालोक्यते, किं वन्दनीयास्ते ? ॥२॥

जना ये भारतं पुष्णन्ति, नित्यं वन्दनीयास्ते ।
अथो तत्पांसुलं कुर्वन्ति ये, किं वन्दनीयास्ते ? ॥३॥

जना एकत्वसूत्रे यैर्निबद्धा वन्दनीयास्ते ।
जनान् ये योधयन्ति प्रत्यहं किं वन्दनीयास्ते ! ॥४॥

अभिघ्नन्तो रिपून् युद्धे चलन्तो वीरगत्याग्रे ।
दिवं ये देशरक्षार्थं प्रयाता वन्दनीयास्ते ! ॥५॥

न ये देशस्य किन्तु स्वीयवंशस्यैव दारिद्र्यम् ।
अपाकर्तुं यतन्ते नेतृवर्या वन्दनीयास्ते ? ॥६॥

अतस्मिंस्तस्य बुद्धिं ये दधाना वन्दनीयास्ते ।
पुनर्ये तत्र तद्बुद्धिं दधति, नो वन्दनीयास्ते ? ॥७॥

नहि प्रत्यक्षमनुमानं न शाब्दं नेषदुपमानम् ।
प्रमाणं मन्यते या सा मतिः किं वन्दनीयास्ते ? ॥८॥

चिरान्निटिले यदासीत् स्थापितं केनापि सांहकृति ।
कलंकं मार्जितं तद्यैर्न केषां वन्दनीयास्ते ! ॥९॥

करामलकं न पश्यन्ती खपुष्पं चैव पश्यन्ती ।
असौ लोकोत्तरा दृष्टिः सखे ! ते वन्दनीयास्ते ? ॥१०॥

पुरा दुर्भावनादीप्तिस्ततः सद्भावनायात्रा !
इयं नीतिर्मता येषां जना नो वन्दनीयास्ते ! ॥११॥

प्रजासु प्रत्यहं कलहं विवर्धयसे स्वपोषार्थम् !
इयं वृत्तिः सखे नेतस्त्वदीया वन्दनीयास्ते ! ॥१२॥

अहिंसाचत्वरे हिंसा, सहिष्णुत्वाजिरे द्वेषः ।
क्वचिद् गृहयुद्धघोषः, किं दशेयं वन्दनीयास्ते ? ॥१३॥

अहो राष्ट्रध्वजं गणतन्त्रदिवसं ये बहिष्कुर्युः ।
किमेते भारतीयाः ? भारतीयैर्वन्दनीयास्ते ? ॥१४॥

प्रियं सत्यं हितं सारं वचो या वक्ति सा वाणी ।
न ते वन्द्या, परं विपरीतवक्त्री वन्दनीयास्ते ? ॥१५॥

यमेवारुह्य यात्रां कुर्वते पारं प्रयातुं तम् ।
प्लवं विच्छेत्तुकामा बालिशा ये, वन्दनीयास्ते ? ॥१६॥

चतुर्दिक् दन्दशूका निर्भयाः फूत्कुर्वते लोके ।
गरुत्मन् ! मौनवृत्तिस्ते किमेषा वन्दनीयास्ते ? ॥१७॥

परीते वह्निना देशे ज्वलति धूधूधधग्धगिति ।
असौ तूष्णीकता ते किं मनागपि वन्दनीयास्ते ? ॥१८॥

न जाने केन सन्दीप्तात्र हिंसा ताण्डवं कुरुते ।
करे धृत्वा करं ये संस्थिताः, किं वन्दनीयास्ते ? ॥१९॥

इयं हिंसासुरी व्याप्नोति हा ! देशं समस्तं मे ।
इयं दैनन्दिनी शोच्या स्थितिः किं वन्दनीयास्ते ? ॥२०॥

उपद्रविणां कृते शस्त्रास्त्रसंघातोऽन्यदेशीयः ।
कथं देशे प्रविष्टः ? किं सुरक्षा वन्दनीयास्ते ? ॥२१॥

उपद्रविभिः कृता निर्दोषिनृणां जीवता दाहाः ।
इमे रुधिरप्रवाहाः किं प्रशासक ! वन्दनीयास्ते ? ।।२२।।

रमन्ते सांख्यपुरुषाभा जनाः स्वासन्दिकायां ये ।
अकर्तारश्च पश्यन्तोऽखिलं, नो वन्दनीयास्ते । ।।२३।।

जनं विनिपात्य दुर्घोरेऽसुरक्षावह्निकुण्डे ये ।
सुरक्षामण्डले गुप्ता रमन्ते, वन्दनीयास्ते ?. ।।२४।।

क्वचिद्ये धर्मनिरपेक्षाः क्वचिद्धर्मस्य वक्तारः ।
क्वचिद्धर्मावतारा नायका नो वन्दनीयास्ते ? ।।२५।।

'कथं निर्वाचने भाविन्यहं विजयी भवामी'ति ।
इदं येषां परं लक्ष्यं, न केषां वन्दनीयास्ते ! ।।२६।।

पदं मद्यं धनं मानं यशो लब्धुं मृषा ब्रुवते ।
वराका 'बुद्धिजीवी'संज्ञका ये, वन्दनीयास्ते ! ।।२७।।

तिलं ताडं, समुद्रं गोष्पदं, मेरुं कणं कर्तुम् ।
समर्था आसते ये सूचनादाः, वन्दनीयास्ते ! ।।२८।।

अहिंसा सत्यमुपकारः श्रमः प्रेमा मतो धर्मः ।
अतो ये सन्ति निरपेक्षा इदानीं वन्दनीयास्ते ! ।।२९।।

यया नीत्या समे सद्भावसूत्रे गुंफिता न स्युः ।
असौ नीतिः किमस्माकं समेषां वन्दनीयास्ते ? ।।३०।।

नरे शठतां दधाना सत्कृतिं दूरे प्रकुर्वाणा ।
इयं या राजनीतिर्दूरतो मे वन्दनीयास्ते ! ।।३१।।

इमे प्राक्पादयोः पतितास्दनु ये पृष्ठमांसादाः ।
खला मशका इवासृक्चूषका नो वन्दनीयास्ते ! ।।३२।।

यदीच्छसि भद्र! भद्रं दुर्जनान् वन्दस्व नित्यं त्वम् ।
अरे ! ये सज्जनास्ते सज्जनाः, किं वन्दनीयास्ते ! ॥३३॥

प्रजाशिक्षासुरक्षाभरणरूपं स्वीयकर्तव्यम् ।
न पालयितुं समर्थाः शासकाः, किं वन्दनीयास्ते? ॥३४॥

क्वचिद्वित्तीयघोटालाः, क्वचित्क्रयविक्रयोत्कोचाः ।
क्वचिच्चान्ये ह्यवाच्या येऽप्युदन्ता वन्दनीयास्ते ? ॥३५॥

कदाचित्खाडकूचर्चा कदाचिज्जंगजूचर्चा ।
इयं या दुर्दशालोक्या किमेषा वन्दनीयास्ते ? ॥३६॥

न यद्दातुं समर्थस्तत्कृते कुरुषे प्रतिज्ञां त्वम् !
अपूर्या किं प्रतिज्ञा तावकीना वन्दनीयास्ते ? ॥३७॥

अहो पूजास्थलं निर्मासि, पूजां नैव कुरुषे त्वम् !
कथय भक्तप्रवर ! ते भक्तिरेषा वन्दनीयास्ते ? ॥३८॥

ययोद्गिरतो विषं स्वस्मिन्निमान् कुम्भीनसान् सहसे !
अये चन्दनतरो ! सैषा धृतिस्ते वन्दनीयास्ते । ॥३९॥

अये पञ्चानन ! त्वां कुक्कुरोऽयं प्रत्यहं निन्दति ।
सहानेन त्वदीया मित्रता किं वन्दनीयास्ते ? ॥४०॥

कवेर्व्याजोक्तिरन्योक्तिः स्वभावोक्तिश्च वक्रोक्तिः ।
अनुक्त्वा किञ्चिदपि सर्वं भणन्ती वन्दनीयास्ते ॥ ॥४१॥

जना देशस्य रक्षार्थं तथा विश्वस्य कुशलार्थम् ।
यतन्ते ये न निजकृत्यैः, कथय किं वन्दनीयास्ते ? ॥४२॥

नरा नार्योऽबलाः सबलाः कनिष्ठा मध्यमा ज्येष्ठाः ।
स्वदेशं ये न वन्दन्ते मताः किं वन्दनीयास्ते ? ॥४३॥

स्वदेशं निन्दयन्तो विश्वबन्धुत्वस्य वक्तारः ।
फलं कांक्षन्ति ये मूलं विना, नो वन्दनीयास्ते ! ॥४४॥

यजन्ते ये विधानोक्तैः स्वकर्मभिरात्मजन्मभुवम् ।
नराः कुत्रापि निवसन्तो न केषां वन्दनीयास्ते ? ॥४५॥

बुधा वीराः कृषाणाः कार्मिका उद्योगिनः कवयः ।
कलाकाराः स्वदेशोन्नायका ये वन्दनीयास्ते । ॥४६॥

निबद्धास्ताडिता निहता तथा विकलाङ्गतां याताः ।
जना ये देशरक्षार्थं, न केषां वन्दनीयास्ते ? ॥४७॥

जना ये मातृभूमेर्वन्दनार्थं वन्दिनो जाताः ।
स्मितास्याः कालपाशं ये चुचुम्बुर्वन्दनीयास्ते ! ॥४८॥

अये मे मातृभूमे ! ते महिम्नो रक्षणार्थं ये ।
बलिं चक्रुः स्व सर्वस्वं, न केषां वन्दनीयास्ते ? ॥४९॥

जननि ! ये त्वां नराः क्षतविक्षतां कर्तुं समीहन्ते ।
कृतघ्नाः कस्य वा पापीयसो वद वन्दनीयास्ते ? ॥५०॥

अयं स्वातन्त्र्यसहकारः सदा सफलः समृद्धः स्यात् !
स्वरक्तैः सेचितोऽयं यैर्न केषां वन्दनीयास्ते ? ॥५१॥

रमाकान्त ! व्यथां देशस्य विश्वस्याथ निजकृत्यैः ।
जना ये वर्धयन्ति प्रत्यहं किं वन्दनीयास्ते ? ॥५२॥

न शब्दो नैव चार्थो न ध्वनिर्नैवास्त्वलंकारः ।
तथापीयं कवे ! कविता त्वदीया वन्दनीयास्ते ! ॥५३॥

(रचनापूर्तितिथिः १४.१.१९९३ ई०)

# मदीयकविते ! कुरुष्व गानम्

सरस्वतीपादपद्मसेवा
यदीयमास्ते परं हि लक्ष्यम् ।
बुधाग्रगाणामतन्द्रितानां
मदीयकविते ! कुरुष्व गानम् ॥१॥

कदापि वागर्थनाम येषां
प्रयुक्तमस्त्रं वृथा न हि स्यात् ।
अलोकसामान्यसत्कवीनां
मदीयकविते ! कुरुष्व गानम् ॥२॥

स्वरश्रुतिग्रामरागबन्धै-
रपूर्वसृष्टेः सुसर्जकानाम् ।
शुभाय संगीतसाधकानां
मदीयकविते ! कुरुष्व गानम् ॥३॥

मृदाश्मना काष्ठखण्डकैर्वा
सृजन्ति ये नूतनां स्वजगतीम् ।
यशस्विनां शिल्पिनां हि तेषां
मदीयकविते ! कुरुष्व गानम् ॥४॥

सुखं धनं स्नेहबन्धनानि
स्वदेशसौख्याय ये त्यजन्ति ।
हुतात्मनां नित्यमेव तेषां
मदीयकविते ! कुरुष्व गानम् ॥५॥

परोपकारव्रतं पवित्रं
सदैव ये पालयन्ति हृष्टाः ।
सुपूजितानां नृणां हि तेषां
मदीयकविते ! कुरुष्व गानम् ॥६॥

निजोपदेशैर्मनोऽन्धकारं
विधूय मे शिष्यसन्ततीनाम् ।
जयन्ति, तेषां मुदा गुरूणां
मदीयकविते ! कुरुष्व गानम् ॥७॥

स्वतन्त्रतायज्ञदीक्षितानां
चिराय कारासु पीडितानाम् ।
मृतिंवराणां नरोत्तमानां
मदीयकविते ! कुरुष्व गानम् ॥८॥

रिपोः करान्मोचयाम्बभूवुः
स्वमातरं भारतावनिं ये ।
विशिष्य तेषां नृणां समेषां
मदीयकविते ! कुरुष्व गानम् ॥९॥

मनुष्यतां रक्षितुं स्वयत्नै-
रनुक्षणं शोधतत्पराणाम् ।
प्रबुधवैज्ञानिकव्रजानां
मदीयकविते ! कुरुष्व गानम् ॥१०॥

सहर्षस्त्रशीर्षं सहस्त्रहस्तं
सहस्त्रपादं जनं भजन्तः ।
समुद्यमा ये लसन्ति तेषां
मदीयकविते ! कुरुष्व गानम् ॥११॥

विषह्य शीतोष्णवर्षकष्ट-
प्रकोपमप्यन्नदायकानाम् ।
तपस्विनां क्षेत्रकर्षकाणां
मदीयकविते ! कुरुष्व गानम् ॥१२॥

उदन्वदाकाशपर्वतेषु
स्वदेशरक्षाव्रतस्थितानाम् ।
रणोद्भटानां मुदा भटानां
मदीयकविते ! कुरुष्व गानम् ॥१३॥

विभिन्नखेलासु कीर्तिमानैः
स्वदेशसम्मानवर्धकाणाम् ।
जितेन्द्रियाणां प्रशस्ययूनां
मदीयकविते ! कुरुष्व गानम् ॥१४॥

प्रसन्नवक्त्राः सदासते ये
दरिद्रतायामपि प्रकामम् ।
विशिष्य तेषां श्रमव्रतानां
मदीयकविते ! कुरुष्व गानम् ॥१५॥

स्वंकीयचरितैर्मनस्सु पित्रोः
प्रकामसन्तोषदायका ये ।
सुता जगद्भूषणानि, तेषां
मदीयकविते ! कुरुष्व गानम् ॥१६॥

असज्जनानां कुनायकानां
कृतघ्न - दुर्वृत्त - वञ्चकानाम् ।
विहाय चर्चां, मनस्विनां त्वं
मदीयकविते ! कुरुष्व गानम् ॥१७॥

सदा प्रजातन्त्ररक्षकाणां
स्वकार्यनिर्वाहतत्पराणाम् ।
प्रदर्शकानां सृतेरभीते-
र्मदीयकविते ! कुरुष्व गानम् ॥१८॥

स्वपाणिपल्लवमुदारकल्पं
न कुत्रचिद् ये प्रसारयन्ति ।
नृणां सदायाचितव्रतानां
मदीयकविते ! कुरुष्व गानम् ॥१९॥

कुरीतयो वा कुनीतयो वा
जगत्यनिष्टं प्रपूरयन्त्यः ।
विलोपिता यैः, सभक्ति तेषां
मदीयकविते ! कुरुष्व गानम् ॥२०॥

स्वकीयवर्णं स्वरं भविष्णुं
विधातुकामासि ? तर्हि नूनम् ।
तपोधनानां जगद्‌गुरूणां
मदीयकविते ! कुरुष्व गानम् ॥२१॥

'सदैव सर्वे भवन्तु सुखिनः
सदैव सर्वे निरामयाः स्युः ।'
मनोरथस्यास्य पोषकाणां
मदीयकविते ! कुरुष्व गानम् ॥२२॥

कुटुम्बमेकं जगद्विधातुं
जनाः सदा ये प्रयत्नशीलाः ।
प्रहृष्य तेषां महात्मनां त्वं
मदीयकविते ! कुरुष्व गानम् ॥२३॥

यदीच्छसि त्वं जनिं स्वकीयां
सदर्थितां कर्तुमार्यशीले !
तदा महिम्नां स्वमातृभूमे-
मदीयकविते ! कुरुष्व गानम् ॥२४॥

अमन्दमानन्दमाप्तुकामा
परेशलीलाब्धिमौक्तिकानाम् ।
कदाचिदेकान्तवासमाप्ता
मदीयकविते ! कुरुष्व गानम् ॥२५॥

(रचनातिथिः २६-१२-१९९३)

# वन्द्यतां काऽपि सा शासनासन्दिका !

(१)

जन्मजन्मान्तरीयं स्वकीयं परं
वैरभावं परित्यज्य यस्या वशात् ।
एकतां यान्ति नेतार एकक्षणे
वन्द्यतां काऽपि सा शासनासन्दिका ॥

(२)

'वर्तमानार्थनीतिः परित्यज्यताम्'
नैकशो यैरिदं वाक्यमुद्घोषितम् ।
तेऽपि यल्लीलया तां भणन्त्युत्तमां
वन्द्यतां काऽपि सा शासनासन्दिका ॥

(३)

यां विधातुं करस्थां न किं किं कृतं
चातुरीभ्राजितैर्नेतृवर्यब्रुवैः ।
यां समासाद्य विस्मर्यते तैर्जनो
वन्द्यतां काऽपि सा शासनासन्दिका ॥

(४)

लक्षकोट्यर्बुदानामहो वञ्चनं
शान्तभावेन यां प्राप्य कर्तुं क्षमम् ।
यां श्रितैश्छन्ददात्री प्रजा पीड्यते
वन्द्यतां काऽपि सा शासनासन्दिका ॥

(५)

दूषणोद्घोषणं सद्गुणानां चये
सद्गुणोद्घोषणं दुर्गुणानां चये ।
यत्प्रभावाद्विधातुं सुशक्यं भवेद्
वन्द्यतां काऽपि सा शासनासन्दिका ॥

(६)

वञ्चनं मित्रघातस्तथा दस्युता
निस्त्रपत्वं कृतघ्नत्वमित्यादयः ।
दुर्गुणाः वन्द्यतां यान्ति सद्यो यया
वन्द्यतां काऽपि सा शासनासन्दिका ॥

(७)

धर्मकामार्थमोक्षोपदेशाकराः
सर्वविद्याचणाः सत्कलाचुञ्चवः ।
अक्षरज्ञानशून्या अपि स्युर्यया
वन्द्यतां काऽपि सा शासनासन्दिका ॥

(८)

देशसेवां विधातुं य आयान्त्यहो
तेऽन्यथाभावमाप्ता न किं कुर्वते।
याम्रधिष्ठातुकामा अधिष्ठाय वा
वन्द्यतां काऽपि सा शासनासन्दिका ॥

(९)

यं स्वतन्त्रं विधातुं हुतं जीवनं
देशभक्तैरसंख्यैर्विलम्बं विना ।
तस्य देशस्य चिन्ताऽपि हेया यया
वन्द्यतां काऽपि सा शासनासन्दिका ॥

(१०)

पण्डितैर्योद्धृभिर्वाणिजैः कार्मिकैः
सर्वकैरेव याद्यत्व आराध्यते ।
सर्वसौख्यप्रदात्री समेषां नृणां
वन्द्यतां काऽपि सा शासनासन्दिका ॥

(११)

केनचिद् दृश्यतामस्मदीया दशा
स्थापिता मूर्ध्नि येऽस्माभिरुत्साहिभिः ।
हन्त ! तैरेव वञ्च्यामहे यद्वशात्
वन्द्यतां काऽपि सा शासनासन्दिका ॥

(रचनातिथिः २६-६-१९९६)

# तं सुभाषं स्मरामो वयं सादरम्

(१)

जानकीनाथपुत्रस्तथाधीतिमान्
तेजसः पुञ्ज आशैशवाद्यो बभौ ।
मातृभूस्वास्थ्यसंवर्धनायागद
तं सुभाषं स्मरामो वयं सादरम् ॥

(२)

'आइ सी एस' साफल्यमाप्त्वाप्यहो
शासनासन्दिकानादरं योऽकरोत् ।
मातृभूम्यर्चनं यस्य पुण्यव्रतं
तं सुभाषं स्मरामो वयं सादरम् ॥

(३)

यस्य चाध्यक्षतायां मिलित्वा जनैः
'पाटलीपुत्र-प्रस्ताव' आक्षिप्यत ।
नूतनान्दोलनं येन सञ्चालितं
तं सुभाषं स्मरामो वयं सादरम् ॥

(४)

नैव दैन्यं न वा याचनाप्यार्जवं
नीतिरास्ते खलानां पुरः सन्नृणाम् ।
शक्तिराराधनीयेति यस्यास्ति धी-
स्तं सुभाषं स्मरामो वयं सादरम् ॥

(५)

येन चाज़ाद हिन्देति नाम्ना बलं
योजयित्वाद्धुतं कर्म सम्पादितम् ।
वीरचेतोमयूराम्बुदं हर्षदं
तं सुभाषं स्मरामो वयं सादरम् ॥

(६)

'दीयतां मे स्वरक्तं भवद्भिस्समै-
रात्मतन्त्र्यं भवद्भ्यो मया दास्यते ।'
आजुहावेति यो भारतीयान् जनान्
तं सुभाषं स्मरामो वयं सादरम् ॥

(७)

यस्य चात्यन्तमोजःप्रदैर्भाषणैः,
पारतन्त्र्यार्दिता भारतीया जनाः ।
कर्तुमैच्छन् स्वदेशं स्वतन्त्रं द्रुतं
तं सुभाषं स्मरामो वयं सादरम् ॥

(८)

'एत दिल्ली' मिति प्रोद्गता यस्य वाग्
भारतीयान् समुत्साहिनोऽकारयत् ।
यं ग्रहीतुं न शक्तास्तथा चाङ्गलाः
तं सुभाषं स्मरामो वयं सादरम् ॥

(९)

यस्य भक्तैरिदानीमपि स्मर्यते
जृम्भितं वीरभावस्य यस्याद्धुतम् ।
योऽमरो राजते मातृभूमेः सुतः
तं सुभाषं स्मरामो वयं सादरम् ॥

(रचनातिथिः १०-८-१९९६)

# तस्य स्मृतिर्विजयते पुरुषोत्तमस्य[1]

(१)

गंगा कलिन्दतनया च सरस्वती च
यं नैजपुण्यसलिलैः परिपावयन्ति ।
तत्रायो निजजनिं प्रथिते प्रयागे
तस्य स्मृतिर्विजयते पुरुषोत्तमस्य ॥

(२)

प्राभावयन्मदनमोहनमालवीयो
लाला च लाजपतरायसुधीवरो यम् ।
भक्तं व्यधाच्च यमहो प्रथितः पटेल-
तस्य स्मृतिर्विजयते पुरुषोत्तमस्य ॥

(३)

सप्रूपनामसमलंकृतप्राड्विवाकाद्
वाक्कीलतां समभजत् प्रथमं ततश्च ।
नाभाख्यराज्यविधिमन्त्रिपदं गतो य-
तस्य स्मृतिर्विजयते पुरुषोत्तमस्य ॥

(४)

कांग्रेसकार्यसमितेरभवत् करांच्याम्
उत्साहपूरितमनाः प्रथमं सदस्यः ।
अध्यक्षतामनु गतश्च दलस्य तस्य
तस्य स्मृतिर्विजयते पुरुषोत्तमस्य ॥

---

१. श्रीपुरुषोत्तमदासटण्डनस्य

(५)

यूपीविधानसदसश्च भवन्नियन्ता
लेभे यशोऽतिविमलं विपुलं मनस्वी ।
संसत्सदस्यपदवीमपि रूढवान् य-
स्तस्य स्मृतिर्विजयते पुरुषोत्तमस्य ॥

(६)

तत्याज यो हि पदवीं विधिमन्त्रिसंज्ञां
कांग्रेससंज्ञकदलस्य च मुख्यतां वा ।
तत्याज किन्तु न हि यो निजराष्ट्रभाषां
तस्य स्मृतिर्विजयते पुरुषोत्तमस्य ॥

(७)

राजर्षिमान्यपदवी यमवाप्य जाता
धन्या मनोज्ञभरतावनिरत्नभूतम् ।
हिन्दीप्रचारमकरन्दमधुव्रतस्य
तस्य स्मृतिर्विजयते पुरुषोत्तमस्य ॥

(८)

यो राष्ट्रभक्तिपरिपूरितमानसः सन्
कारागृहस्य बहुकष्टततिं विषेहे ।
दुःखे सुखे च किल यः स्थितप्रज्ञ आसीत्
तस्य स्मृतिर्विजयते पुरुषोत्तमस्य ॥

(९)

हं हो यदाद्य खलु भारतभूमिभागे
संदृश्यते निजगिरः परितो ह्युपेक्षा ।
प्रासंगिकत्वमयते स्मरणं यदीयं
तस्य स्मृतिर्विजयते पुरुषोत्तमस्य ॥

यं श्रद्धयार्चितुमिदं[1] भवनं वरेण्यं
निर्मापितं बुधवरैर्विविधैः सुयत्नैः
स्मर्यास्ति यस्य निजराष्ट्रगिरः सपर्या
तस्य स्मृतिर्विजयते पुरुषोत्तमस्य ॥

(रचनातिथिः १४-९-१९९६)

१. दिल्लीस्थितं 'हिन्दी-भवनम्'।

# स्वतन्त्रतायाः स्वर्णजयन्ती

(१)

देशभक्तिभावितचित्तान् सादरं नमन्ती ।
स्वातन्त्र्याहववीरभटान् सादरं स्मरन्ती ।
देशवासिनां चिन्तनधारां पुरो नयन्ती ।
सम्प्राप्तेयं स्वतन्त्रतायाः स्वर्णजयन्ती ॥

(२)

यैर्देशस्य कृते समर्पितं निजसर्वस्वम् ।
दर्शितवन्तो यं चाङ्ग्लेभ्यः पराक्रमं स्वम् ।
तान् स्मारयति स्वतन्त्रतायाः स्वर्णजयन्ती ।
सम्प्राप्तेयं स्वतन्त्रतायाः स्वर्णजयन्ती ॥

(३)

क्रान्तिकारिणां तपस्विनां वै विविधतपस्याः ।
हुतात्मभिर्या कृता देशमातुर्वरिवस्याः ।
ता अर्चयति स्वतन्त्रतायाः स्वर्णजयन्ती ।
सम्प्राप्तेयं स्वतन्त्रतायाः स्वर्णजयन्ती ॥

(४)

अहह ! खण्डिता भारतभूमिर्नः सञ्जाता ।
प्रादुर्भूता अत्याचारा दुष्टोत्पाताः ।
स्मारयतीदं स्वतन्त्रतायाः स्वर्णजयन्ती ।
सम्प्राप्तेयं स्वतन्त्रतायाः स्वर्णजयन्ती ॥

(५)

देशे क्रमशो जातो बहुविधनव्यविकाशः ।
किञ्च दृश्यते हन्त! चतुर्दिग् विविधविनाशः ।
बोधयतीदं स्वतन्त्रतायाः स्वर्णजयन्ती ।
सम्प्राप्तेयं स्वतन्त्रतायाः स्वर्णजयन्ती ॥

(६)

रक्तदायिनो नाम्ना, कृत्यै रक्तपायिनः ।
देशसेविनो नाम्ना, कृत्यैर्देशभक्षिणः ।
पदे पदे विवशा विवशा दृक्पथं नयन्ती ।
सम्प्राप्तेयं स्वतन्त्रतायाः स्वर्णजयन्ती ॥

(७)

दूरे भावताद् देशाद् दुष्टो भ्रष्टाचारः ।
दूरे भवताद् देशान्निन्द्योत्कोचाचारः ।
निर्दिशतीदं स्वतन्त्रतायाः स्वर्णजयन्ती ।
सम्प्राप्तेयं स्वतन्त्रतायाः स्वर्णजयन्ती ॥

(८)

रक्षत देशं मनसा वचसा किञ्च कर्मणा ।
सीमान्तेषु भवत सज्जा आवृता वर्मणा ।
आह्वयतीदं स्वतन्त्रतायाः स्वर्णजयन्ती ।
सम्प्राप्तेयं स्वतन्त्रतायाः स्वर्णजयन्ती ॥

(रचनातिथिः १५-८-१९९७)

# लोकतन्त्रेऽस्मिन्

अकल्प्यं किं न घटते
भावगम्ये लोकतन्त्रेऽस्मिन् ।
भवति किं, किं भविष्यति वा
न जाने लोकतन्त्रेऽस्मिन् ॥१॥

महामात्यत्रयं दृष्टम्
मुहुर्निर्वाचनं घुष्टम् ।
अहो स्वातन्त्र्यहेमाब्दे
किमेतल्लोकतन्त्रेऽस्मिन् ॥२॥

मयूरव्यालशालूराः
स्वकीयं कांक्षितं लब्धुम्।
स्थिता एकत्र गतवैरा
महिष्ठे लोकतन्त्रेऽस्मिन् ॥३॥

विडाला मूषकैस्साकं
वृका हरिणैस्समं मैत्रीम् ।
प्रकुर्वाणा विलोक्यन्ते
पदार्थं लोकतन्त्रेऽस्मिन् ॥४॥

समीहितसिद्धये श्लिष्टाः
सुताः कुन्त्याश्च गान्धार्याः ।
महाभारतकथेयं
काप्यपूर्वा लोकतन्त्रेऽस्मिन् ॥५॥

अहो हैयङ्गवीनं सख्य-
मिच्छत्यग्निना साकम् ।
कदल्या मित्रता दृष्टा
बदर्या लोकतन्त्रेऽस्मिन् ॥६॥

इमे काका उलूकैः सार्ध-
मिच्छन्ति स्वसम्बन्धम् ।
तितउना वारिमैत्रीं पश्य
बन्धो ! लोकतन्त्रेऽस्मिन् ॥७॥

तमस्तेजश्च मित्रे स्तः
हयानां सैरिभैः सख्यम् ।
अजव्याघ्रौ सखायौ स्तः
प्रकृष्टे लोकतन्त्रेऽस्मिन् ॥८॥

विधुन्तुदचन्द्रयोः प्रीतिः
पयोजम्बीरयोः प्रीतिः ।
अजानां कौटिकैः प्रीति-
र्विलोक्या लोकतन्त्रेऽस्मिन् ॥९॥

तमस्तेजो दिनं रात्रिः
सुधा विषमन्धता दृष्टिः ।
अहो पर्यायतां प्राप्ता
विरुद्धा लोकतन्त्रेऽस्मिन् ॥१०॥

शृणुध्वं रे सुबद्धं
भक्ष्यभक्षकसख्यमिह लोके ।
विपत्तेः कारणं नास्ते
सुपूज्ये लोकतन्त्रेऽस्मिन् ॥११॥

अयं योऽस्त्यस्मदाशानां
प्रतीकः प्रतिनिधिः सदने ।
स आशामस्मदीयां
पूरयति नो लोकतन्त्रेऽस्मिन् ॥१२॥

किमपि कर्तुं तथाऽकर्तुं
तथा चैवान्यथा कर्तुम् ।
विदूषकसन्निभो नेता
प्रभुर्वै लोकतन्त्रेऽस्मिन् ॥१३॥

मतं यल्लोकतन्त्रं
शासनं नृणां नृभिर्नृभ्यः ।
विलीनं तत्क्व सञ्जातं
प्रचण्डे लोकतन्त्रेऽस्मिन् ॥१४॥

क्वचिच्चास्त्रीभवति सदने
ध्वनेर्विस्तारकं यन्त्रम् ।
सदस्याः कान्दिशीका हन्त !
दृष्टा लोकतन्त्रेऽस्मिन् ॥१५॥

अहो ! युद्धाजिरं जातं
सभाभवनं तु नेतृणाम् ।
विधायक एव पण्याश्वी-
भवति हा ! लोकतन्त्रेऽस्मिन् ॥१६॥

कदाचिद्धावनं दलतः
कदाचिन्नूलदलघटनम् ।
कदाप्यपवञ्चनाकाण्डं
विलोकय लोकतन्त्रेऽस्मिन् ॥१७॥

करौ बद्ध्वा मुखे दत्वा
तृणं नत्वा शिरः स्वीयम् ।
वृकाः कांक्षन्ति मेषाणां
मतं बत लोकतन्त्रेऽस्मिन् ॥१८॥

क्षणे रोष: क्षणे तोष:
क्षणे त्याग: क्षणे ग्रहणम् ।
क्षणे निन्दा क्षणे स्तुतयो
मतार्थं लोकतन्त्रेऽस्मिन् ॥१९॥

न कश्चित्कस्यचिन्मित्रं
न कश्चित्कस्यचिच्छत्रु: ।
मतार्थं शात्रवं मैत्री
भवति भो ! लोकतन्त्रेऽस्मिन् ॥२०॥

क्वचिद्दानी क्वचिद्भिक्षु:
क्वचिच्छिष्ट: क्वचिद्धृष्ट: ।
क्वचिद् ह्रीणोऽथ निर्लज्जो
मतार्थी लोकतन्त्रेऽस्मिन् ॥२१॥

जनैर्दत्तं मतं यस्मै
प्रतार्यास्तेन ते जाता: ।
स्वतन्त्रं भारतं किं किं
न पश्यति लोकतन्त्रेऽस्मिन् ॥२२॥

अहो जनताजनार्दन-
पूजनं यस्यास्ति कर्तव्यम् ।
स नेता वञ्चनं कुरुते
जनानां लोकतन्त्रेऽस्मिन् ॥२३॥

अये म्याऊंकरोत्येषा
कथं मामेव मार्जारी ।
मदीया पालिता यास्ते
कृतघ्ना लोकतन्त्रेऽस्मिन् ॥२४॥

कलासाहित्यसङ्गीत-
प्रहीणो ना तृणं खादति ।
पशूनां भागधेयं यद्
हरे! शृणु लोकतन्त्रेऽस्मिन् ॥२५॥

वहन्तः स्वं ध्वजं चिह्नं
करौ बद्ध्वा मतं लब्धुम् ।
वनीयक-कर्मनिष्णाता
भ्रमन्ते लोकतन्त्रेऽस्मिन् ॥२६॥

कथं बन्धो मतं दास्यसि
भयं त्यक्त्वा स्वके क्षेत्रे ।
वृतः पाटच्चरैर्मतदान-
केन्द्रे लोकतन्त्रेऽस्मिन् ॥२७॥

विकासोऽप्यद्भुतो जातो
विनाशोऽप्यद्भुतो जातः ।
प्रकाण्डा काण्डसन्तति-
रीक्ष्यते बत लोकतन्त्रेऽस्मिन् ॥२८॥

अयोग्याः प्रोन्नतिं प्राप्ताः
सुयोग्या अवनतिं नीताः ।
सतामपवञ्चनं प्रायो
विलोक्यं लोकतन्त्रेऽस्मिन् ॥२९॥

कथ। भो मन्यसे देशं
धनं पित्र्यं विभज्याद्यम् ।
त्वया नेतः ! कृता का वास्य
सेवा लोकतन्त्रेऽस्मिन् ॥३०॥

मनस्यन्यद् वचस्यन्यत्
तथान्यत्कर्मणि स्वीये ।
दधानः प्रायशो लोकस्य
नेता लोकतन्त्रेऽस्मिन् ॥३१॥

कुतो निजसंस्कृतेश्चिन्ता
कुतो देशस्य वा चिन्ता ।
पदस्थाश्चिन्तयन्ति स्वां
समृद्धिं लोकतन्त्रेऽस्मिन् ॥३२॥

विदूषककर्म कुर्वाणा
जनान् ये वञ्चयन्त्यनिशम् ।
त एवाद्यासते मान्या-
स्तथाप्ता लोकतन्त्रेऽस्मिन् ॥३३॥

जयो मे दक्षिणे हस्ते
जयो मे वामहस्ते च ।
दलं हित्वा भणति चतुरः
प्रवीरो लोकतन्त्रेऽस्मिन् ॥३४॥

सरस्वत्या मरालो
लुञ्च्यते लक्ष्म्या उलूकेन ।
पिका मौनं भजन्ते
काकभीता लोकतन्त्रेऽस्मिन् ॥३५॥

बलात्कारा नृहत्या
बम्बविस्फोटास्तथा दाहाः ।
अहो दैनन्दिनी वार्ताऽ
स्मदीये लोकतन्त्रेऽस्मिन् ॥३६॥

इयं देवी प्रतारण-चातुरी
भ्रष्टावने दक्षा ।
मता नृपनीतिसंज्ञा
वन्दनीया लोकतन्त्रेऽस्मिन् ॥३७॥

पुनस्ते मे मतं काङ्क्षन्ति
यैरेवास्मि परिमुषितः ।
अहो ! निर्लज्जतेयं कीदृशी
ननु लोकतन्त्रेऽस्मिन् ॥३८॥

मतं मे कांक्षमाणा ये
पुनर्मे द्वारि सम्प्राप्ताः ।
कथं तेषां प्रियं कुर्याम्
न जाने लोकतन्त्रेऽस्मिन् ॥३९॥

शकाराणां विकारा
जृम्भमाणा नित्यमीक्ष्यन्ते ।
विपन्नाश्चारुदत्ताः
किञ्च धूता लोकतन्त्रेऽस्मिन् ॥४०॥

महर्घत्वं निधायाङ्के
सरत्यग्रे नवं वर्षम् ।
शुभेच्छा मामकीनाः स्यु-
र्भवद्भ्यो लोकतन्त्रेऽस्मिन् ॥४१॥

कटूक्तीः प्रत्यहं कुर्वे
समीक्षाः प्रत्यहं कुर्वे ।
न रिङ्गति कस्यचित्कर्णे
ऽपि यूका लोकतन्त्रेऽस्मिन् ॥४२॥

महाकाव्यान्यपेक्ष्यन्ते
यदीयं यद्यशो गातुम् ।
मदीयैः सीमितैः शब्दै-
र्भवति किं लोकतन्त्रेऽस्मिन् ॥४३॥

प्रसिद्धिं लम्भिताः खल-
नायकाः खलु नायकत्वेन ।
विपयर्यमीदृशं त्वं
पश्य बन्धो ! लोकतन्त्रेऽस्मिन् ॥४४॥

इदं दाहात्मकं तेजः
सुगूढं यन्नृणामन्तः ।
मदान्धाः ! कि न पश्यत रे ?
वदत भो लोकतन्त्रेऽस्मिन् ॥४५॥

---

(रचनातिथिः २०.१.१९९८)

# भारतस्य विजयोऽयम्

(१)

"क्रुद्धं हिंसाबलं जितं किल सत्याहिंसाबलतः ।
आंग्लशासनं खलूच्चाटितं भारतस्य विजयोऽयम् ॥

(२)

पञ्चषष्टितमवर्षेऽस्माकं पश्चिमोत्तरे वीराः ।
पदचर्यया गता लाहौरं, भारतस्य विजयोऽयम् ॥

(३)

एकसप्ततौ दिसम्बरे किलं नवतिसहस्त्रं पाकाः ।
बद्धा निरागसां हन्तारो, भारतस्य विजयोऽयम् ॥

(४)

वारद्वयं पोखरणगर्भे ह्यणुविस्फोटपरीक्षा ।
स्वीयसाधनैः सफला जाता, भारतस्य विजयोऽयम्॥

(५)

अग्निनागप्रभृतीन्यस्त्राणि प्रोद्भासन्तेऽस्माकम् ।
तर्जयन्ति वैरिणः प्रतिपलं, भारतस्य विजयोऽयम् ॥

(६)

अवतारिता युद्धपोताः सागरवक्षसि सोत्साहम् ।
आत्मरक्षणं विदधति वीराः, भारतस्य विजयोऽयम् ॥

(७)

मा चिन्तां कुरु रमाकान्त ! सागरे वियति भूपृष्ठे ।
निस्तन्द्रा जाग्रति वीरास्ते, भारतस्य विजयोऽयम् ॥"[१]

त्रीणि पदानि ४-७-१९९९ तारिकायां प्रणीतानि। तानि चात्रोपस्थाप्यन्ते :-

(८)

द्रासबटालिककककसरमश्कोभागा अस्मद्वीरैः ।
यथा रक्षिता शत्रोर्हस्तात्, भारतस्य विजयोऽयम् ॥

(९)

भातृभूमिरक्षार्थं वीराः वीरगतिं लब्ध्वा यत् ।
रविमण्डलभेदनं चक्रिरे भारतस्य विजयोऽयम् ॥

(१०)

वायुसैनिका धरासैनिका सन्नायका भटानाम् ।
स्थास्यन्तीमे सदा प्रणम्या भारतस्य विजयोऽयम् ॥

(११)

"भ्रातश्चिन्तां नो कुर्वेऽहं किन्तु कामयेऽप्यन्यत् ।
पश्य कीदृशो मया काम्यते भारतस्य विजयोऽयम् ॥

(१२)

भ्रष्टाचारो महार्घता आतंकवाद उत्कोचः ।
निर्धनता यदि पराजिताः स्युर्भारतस्य विजयोऽयम् ॥

(१३)

वृत्तिहीनता विघटनवृत्तिर्जनतामूढीकारः ।
जिताः पूर्णतो यदि पूर्णः स्याद्भारतस्य विजयोऽयम् ॥

(१४)

यदि च विदूषकनिभा नायका जनतां नो लुण्ठेयुः ।
धर्मजातिभाषाविभेदतो भारतस्य विजयोऽयम् ॥

(१५)

बाह्यमान्तरं प्रदूषणं नो नागरिकान् बाधेत ।
अभयं यदि तेषां हृदि विलसेद्भारतस्य विजयोऽयम् ॥

(१६)

शिक्षा स्वास्थ्यं क्रीडाभ्यासो देशभक्तिरविचलिता ।
सम्पूर्णेषु जनेषु भवेद्यदि भारतस्य विजयोऽयम् ॥

(१७)

क्षेत्रेषु स्यात्सस्यबहुलता कारक्षेषूत्पादः ।
प्रतिहस्तं स्याद्वृत्तियुक्तता, भारतस्य विजयोऽयम् ॥

(१८)

पठतु जनो यां काममपि भाषां किन्तु राष्ट्रभाषां प्रति।
नैवोपेक्षां यदा धारयेत्, भारतस्य विजयोऽयम् ॥

(१९)

विज्ञानं साहित्यं वाणिज्यं कृषिशिल्पोद्योगाः ।
अध्यात्म्यं कलाश्च जृम्भन्ताम्, भारतस्य विजयोऽयम्॥

(२०)

वेषभूषयोपासनपद्धत्याशनेन संस्कारैः ।
भिन्ना अप्येकतां भजेयुर्भारतस्य विजयोऽयम् ॥

(२१)

स्वतन्त्रतां यः कामयते सम्पूर्णजगद्देशानाम् ।
सदा वर्धताम् सदा राजताम् भारतस्य विजयोऽयम् ॥

(इयं रचना दिल्ली-संस्कृत-हिन्दी-सिन्धी-पञ्जाब्युर्दूकादमीभिः दिल्लीस्थे 'शाह-आडिटोरियमे'-त्यभिधे सभाभवने १६-१२-१९९८ तारिकायां समायोजिते 'विजय-दिवसे' पठितासीत्।

(रचनातिथिः १६-१२-१९९८ 'विजय-दिवसः' किञ्च ४-७-१९९९)

# प्रणम्याः कारगिलवीराः[1]

(१)

जयन्त्येतेऽस्मदीया गौरवाङ्काः कारगिलवीराः ।
समर्च्या आसतेऽस्माकं प्रणम्याः कारगिलवीराः ॥

(२)

मई-षड्विंशदिवसादैषमो मासद्वयं यावत् ।
अघोषित-पाक-रण-जयिनो[2]ऽभिनन्द्याः कारगिलवीराः ॥

(३)

अकस्मात्प्राविशन्नस्मद्गृहे गूढप्रवेशा ये ।
स्वदेशात्तान् बहिष्कर्तुं प्रचेलुः कारगिलवीराः ॥

(४)

परित्राणाय साधूनां विनाशार्थं च दुष्टानाम् ।
समारम्भं द्रुतं चक्रुः प्रणम्याः कारगिलवीराः ॥

(५)

बटालिग्-द्रास-मश्को-ककसरक्षेत्रेषु लीनानाम् ।
रिपूणां दुर्दशां चक्रुः समिद्धाः कारगिलवीराः ॥

(६)

जुबर-थारू-कुकुरथाङ्-तुर्तुकाख्येभ्योऽद्रिशिखरेभ्यः ।
तुलालिङ्गात्तथा शत्रूनतौत्सुः कारगिलवीराः ॥

(७)

दिशन्तो दुर्विपाकं पाककितवानां प्रयाणैः स्वैः ।
जगर्जुर्दुगमक्षेत्रे कृतान्ताः कारगिलवीराः ॥

(८)

अवाक्षुस्ते शतघ्नीः स्वीयहस्तैरेव सोत्साहम् ।
ववर्षुर्भीषणान् बम्बान् रिपूपरि कारगिलवीराः ॥

(९)

ममन्थुस्ते रिपून् सर्वान् निलीनान् गूढभागेषु ।
स्वदेशस्य प्रतिष्ठां ते ररक्षुः कारगिलवीराः ॥

(१०)

भुशुण्डीनां शतघ्नीनां भयङ्करगोलकापातैः ।
रिपूनुच्चाटयामासुः प्रवीराः कारगिलवीराः ॥

(११)

अरीन् विद्रावयामासुः शठान् शिक्षापयामासुः ।
खलान् प्रध्वंसयामासुः प्रणम्याः कारगिलवीराः ॥

(१२)

ध्वजः शार्दूलशिखरे[३] स्वस्त्रिवर्णः स्थापितो यैर्यैः ।
समे ते सन्ति सर्वेषां प्रणम्याः कारगिलवीराः ॥

(१३)

हनीफुद्दीनसौरवकालियाहूजास्तथा चान्ये ।
महोत्साहा रवेर्मण्डलमभिन्दन्[४] कारगिलवीराः ॥

(१४)

रणे क्षतविक्षताङ्गा अप्यदम्योत्साहपरिपूर्णाः ।
जिगीषापूरितात्मानः प्रचण्डाः कारगिलवीराः ॥

(१५)

अहो ये मातृभूमे रक्षणार्थं स्वीयसर्वस्वम् ।
बलिं चक्रुः कथं ते विस्मृताः स्युः कारगिलवीराः ॥

( १६ )

जनन्यै जन्मभूम्यै त्यक्तसर्वस्वा रणक्षेत्रे ।
हुतात्मानो न वन्द्याः कस्य शतशः कारगिलवीराः ॥

( १७ )

समस्तं भारतं ह्येकत्वसूत्रे बाधयाञ्चक्रुः ।
बलिं कृत्वा स्वदेशार्थं स्वदेहान् कारगिलवीराः ॥

( १८ )

प्रधानामात्य[१] आस्तामस्तु वा साधारणो लोकः ।
कृतज्ञः सन् नमति युष्मान् प्रणम्याः कारगिलवीराः! ॥

( १९ )

'द्रुतं विजयाभियानं सिद्ध'मित्यत्रास्ति को हेतुः ?
इहोत्तरमास्त उपयुक्तं 'प्रवीराः कारगिलवीराः' ॥

( २० )

शृणुध्वं पाकनेतारः शृणुध्वं पाकबलपतयः ।
यदीच्छथ शं तदा नो कोपनीयाः कारगिलवीराः ॥

( २१ )

इमे नकुला मयूरा वैनतेयाः पाकनागानाम् ।
इमे पञ्चानना द्विषतां द्विपानां कारगिलवीराः ॥

( २२ )

शृणुध्वं निस्त्रपा आतङ्कवादप्रेरिताः मूढाः ।
इमे जाग्रति दिवानक्तं सशस्त्राः कारगिलवीराः ॥

( २३ )

उदन्वद्भूधराकाशेषु नित्यं देशरक्षार्थम् ।
इमे तिष्ठन्ति सन्नद्धा विनिद्राः कारगिलवीराः ॥

(२४)

'अविश्वस्ते न विश्वासो विधेयो जातुचिद्विदुषा' ।
दिशन्तीदं भरतभूनायका: ! किल कारगिलवीरा: ॥

(२५)

'शठे शाठ्यं विधेयं' 'दुर्जन: शाम्येन्न चोपकृतै:' ।
'वधार्हश्चाततायी'-वेदयन्ते कारगिलवीरा: ॥

(२६)

रमाकान्त ! त्वया चान्यै: कवीन्द्रैरीडिता: काव्यै: ।
सदा स्थास्यन्ति पूजार्हा अमर्त्या: कारगिलवीरा: ॥

षड्विंशदिवसारब्धे शान्ते षड्विंशके दिने ।
विजयाख्याभियाने ये दर्शितस्वपराक्रमा: ॥१॥

चतु:शताधिका वीरा हुतात्मानो यशस्विन: ।
जेताश्च रिपूणां ये, क्षताङ्गा ये भटोद्भटा: ॥२॥

शत्रून् कारगिलक्षेत्राधित्यकोपत्यकासु ये ।
गतासून् कान्दिशीकाँश्च चक्रिरे रणभैरवा: ॥३॥

तेषां कीर्तिं ककुब्व्याप्तां षड्विंशत्या पदां गिरन् ।
विधत्ते लेखनी धन्यां रमाकान्तो 'रमालये' ॥४॥

(रचनापूर्तितिथि: २६-७-१९९९)

१. 'विजयाभियाने (आपरेशन विजय)' भागं ग्रहीतारो भारतीय: सैनिका:। २. २६.५.१९९९ त: २६.७.१९९९ पर्यन्तं कारगिल-क्षेत्रे प्रचलितं पाकिस्तान-प्रेषितगूढाक्रमणकारिणामुच्चाटनाय यद् युद्धमिवाभवत्तत्र विजयिन: । कारगिलक्षेत्रे ये भारतीया: वायु-सैनिका: स्थल-सैनिकाश्च पराक्रमं प्रदर्शितवन्तस्तेऽत्र रचनायां 'कारगिलवीरा:' इति संज्ञया व्यपदिष्टा:। ३. 'टाइगर हिल'-इत्यत्र। ४. युद्धे वीरगतिका आदित्य-मण्डलं भित्वा ब्रह्मभावं गच्छन्तीति विश्वास:। ५. प्रधानमन्त्री।

# योऽयं कृतः शपथस्त्वया

योऽयं कृतः शपथस्त्वया तस्यार्थमपि जानासि किम् ?
यदिदं प्रतिज्ञातं त्वया तस्याशयं जानासि किम् ?

(१)

कर्तुं यथा सरलस्तथा शपथो न निर्वोढुं सखे !
शपथस्य निर्वाहो भवति कण्टकपथानुसृतिः सखे !
त्यक्त्वा सुमान्यालिङ्गसे कटुकण्टकान्, जानासि किम् ?
योऽयं कृतः शपथस्त्वया तस्यार्थमपि जानासि किम् ?

(२)

व्यालीवदनचुम्बनमिदं करवालधारालेहनम्
क्षुरधारया पदमित्रता मधुराशया गरलाशनम्
त्यक्त्वा सुखदतल्पं सखे ! भूमौ स्वपिषि, जानासि किम् ?
योऽयं कृतः शपथस्त्वया तस्यार्थमपि जानासि किम् ?

(३)

शपथं विधाय सखे ! त्वया हस्तौ निगडबद्धौ कृतौ
शपथं विधाय सखे ! त्वया पादौ निगडबद्धौ कृतौ
बद्धोऽसि वचसा कर्मणा मनसा त्वमिति, जानासि किम् ?
योऽयं कृतः शपथस्त्वया तस्यार्थमपि जानासि किम् ?

(४)

नो लप्स्यसे निद्रां निशायां नापि दिवसे निर्वृतिम्
चिन्ताप्रतान्तविलोचनां त्वं द्रक्ष्यसि स्वामाकृतिम्
आमन्त्रितास्ते या विपत्तस्याः फलं जानासि किम् ?
योऽयं कृतः शपथस्त्वया तस्यार्थमपि जानासि किम् ?

(५)

शपथस्य पूर्त्यर्थं त्वया पेयं भवेद्गरलं मुदा
शपथस्य पूर्त्यर्थं त्वयाध्यवसाय आराध्यः सदा
शपथस्य रक्षार्थं त्वयार्प्यं जीवनं, जानासि किम् ?
योऽयं कृतः शपथस्त्वया तस्यार्थमपि जानासि किम् ?

(६)

ज्यायान् कनीयान् वा भवेच्छपथो गृहीतो मानवैः
तद्रक्षणार्थं लौहचणकाश्चर्वणीया मानवैः
शपथान्मनाक् प्रचलन्ति नो सत्यव्रताः, जानासि किम् ?
योऽयं कृतः शपथस्त्वया तस्यार्थमपि जानासि किम् ?

(७)

यैः पूरितः शपथो निजस्ते लोकवन्द्याः सम्मताः
यैः पूरितः शपथो नरा इतिहासपुरुषास्ते मताः
शपथस्य भेत्ता कथ्यते जीवन्मृतो, जानासि किम् ?
योऽयं कृतः शपथस्त्वया तस्यार्थमपि जानासि किम् ?

(८)

शपथो न कर्गलखण्डलिखितायास्तु पङ्क्तेर्वाचनम्
शपथोऽस्ति पीडासन्ततेरानन्दसहितं पाचनम्
शपथोऽस्ति मनसः कर्गले स्वात्माङ्कनं, जानासि किम् ?
योऽयं कृतः शपथस्त्वया तस्यार्थमपि जानासि किम् ?

(९)

शपथो न केवलमस्ति वाण्या वर्णमात्रोच्चारणम्
शपथस्तु बन्धो ! कथ्यते पञ्चाग्नितपसो धारणम्
होतव्य आत्मा मानवैस्तत्पूर्तये, जानासि किम् ?
योऽयं कृतः शपथस्त्वया तस्यार्थमपि जानासि किम् ?

(१०)

मनसाथ वचसा कर्मणा भिन्ना भवन्ति न ये जनाः
सम्मानभाजनतां जगति ते यान्ति सर्वेषां जनाः
क्षतवाग्जनो निन्द्यो भवति लोके, सखे ! जानासि किम् ?
योऽयं कृतः शपथस्त्वया तस्यार्थमपि जानासि किम् ?

(११)

शपथेन बद्धा नो जना निजलाभचिन्तां कुर्वते
न हि ते स्वशपथापेक्षया निजजीवनं बहु मन्वते
स्नेहं दयां सौख्यं न ते गणयन्ति, भण, जानासि किम् ?
योऽयं कृतः शपथस्त्वया तस्यार्थमपि जानासि किम् ?

(१२)

लोभेन भयतः कामतो वा यो निजं शपथं त्यजेत्
शपथेन साकं स हि पुमान् निजजीवनं न हि किं त्यजेत् !
शपथस्य रक्षा ह्यात्मजयतो जायते, जानासि किम् ?
योऽयं कृतः शपथस्त्वया तस्यार्थमपि जानासि किम् ?

(१३)

विस्मृत्य शपथं ये जनाश्चातुर्यखेलां तन्वते
चिन्वन्ति ते कामं धनं, न हि ते यशः किल चिन्वते
सम्भावितस्याकीर्तिरतिमृत्युर्भवति, जानासि किम् ?
योऽयं कृतः शपथस्त्वया तस्यार्थमपि जानासि किम् ?

(१४)

ये वञ्चयन्त्यनिशं जनान् शपथं गृहीत्वा मानवाः
आत्मानमथ सर्वेश्वरं जानन्ति नो ते मानवाः
मिथ्याव्रतानां लुप्यते तेजो मुखाज्जानासि किम् ?
योऽयं कृतः शपथस्त्वया तस्यार्थमपि जानासि किम् ?

(१५)

अधुना यदा शपथः कृतस्त्वयका तदायं रक्ष्यताम्
प्रत्यक्षरं शपथस्य बन्धो ! रक्षणीयं, रक्ष्यताम्
उच्चैः स्वरेणास्मत्पुरो यदवादि तज्जानासि किम् ?
योऽयं कृतः शपथस्त्वया तस्यार्थमपि जानासि किम् ?

(१६)

सम्प्रति शपथरक्षार्थमात्मा पीडनीयो रे ! त्वया
विस्मृत्य निजसौख्यं सखे ! लोकः समाराध्यस्त्वया
ईशः शपथकाले त्वया साक्षीकृतो जानासि किम् ?
योऽयं कृतः शपथस्त्वया तस्यार्थमपि जानासि किम् ?

(१७)

रक्ष प्रतिज्ञामात्मनो वर्धय तपः स्वं प्रत्यहम्
शपथं हि पूरय शुद्धमनसा, ते हितं कथयाम्यहम्
सम्पूर्य शपथं लप्स्यसे सुयशः स्थिरं, जानासि किम् ?
योऽयं कृतः शपथस्त्वया तस्यार्थमपि जानासि किम् ?

(१८)

रक्ष्येत शपथस्तावकोऽक्षरशो मयेदं काम्यते
सोढ्वापि कष्टं सफलतां विन्देति बन्धो ! काम्यते
नैवोत्सहे त्वां भग्नशपथं द्रष्टुमिति जानासि किम् ?
योऽयं कृतः शपथस्त्वया तस्यार्थमपि जानासि किम् ?

(रचनातिथिः १३-१०-१९९९ रात्रौ ८-०० वादनतः १२-०० वादनं यावत्
निशीथे दिल्ली-शिमला मार्गे)

# भावसन्धिः

विमानं नीतवन्तस्ते विना काठिन्यमस्माकम्
'अमृतसर'-वायुयानस्थानके तैलं गृहीतं तैः ।
पुनर्व्यापादितो रूपेनकतियालो नृशंसैस्तै-
र्वयं विवशाः स्थिता गेहे, विलोक्यैतद्भृशं दूये ।।१।।

अथो दुबई गतैस्तैर्मोचिताः किल यात्रिणः केचित्
तदनु कन्धारभूमौ व्यूहरचना तैः कृता सम्यक् ।
दिनान्यष्टौ स्थितैस्तैस्तत्र, यद्यत्काङ्क्षितं तत्तत्
गृहीतं शासनात्सर्वं, विलोक्यैतद् भृशं दूये ।।२।।

विमाने ये स्थितास्ते यात्रिणो निजगेहमायाताः
प्रसन्नोऽहं, मुखान्मृत्योर्विमुक्तास्तेऽहमिति मन्ये।
परं विज्ञाय मुक्तिं क्रूरकर्मातङ्किनां त्वरितां
शिरोऽवनतं मदीयं ग्लानितोऽहं मानसे दूये ।।३।।

न दूयेऽहं रुजो वित्तस्य नाशाद्बन्धुनाशाद्वा
न दूयेऽहं सभायां मेऽपमानान्मित्रघाताद्वा ।
न दूये पुत्रशाठ्याद्वाप्युपेक्षायाः स्वजायायाः
परं राष्ट्रस्य वैवश्यं विलोक्याहं भृशं दूये ।।४।।

स धन्यो राष्ट्रपतिपूर्वः कृती शंकर दयालो यो
जहौ प्राणान् विवशताग्लानिनाट्यप्रेक्षणात्पूर्वम् ।
ह हा रचना वराकी नष्टपतिका कां गतिं यास्यति
दशां श्रुत्वा तदीयां हे प्रभो ! चित्ते भृशं दूये ।।५।।

सहस्राब्द्याः शताब्द्या वान्तिमं वर्ष शुभं भूयात्
जगत्यातङ्कवादोन्मूलनस्यारम्भ उद्भूयात् ।
न देशस्यास्य महिमा स्वाभिमानो वा तिरोभूयात्
तथा भूयात् प्रयत्नो येन नैवाहं पुनर्दूये ।।६।।

ज्वलतु चलितेन्धनोऽग्निः पन्नगः स्वीयां फणां कुरुतात्
स्वमहिमानं विजानीयाद्विवशतादष्टदेशोऽयम् ।
'स्वराष्ट्रे जागृयामे'तीदमस्माभिस्सदा स्मार्यं
न चेन्नो वञ्चयेत्कश्चित्तदा नेत्थं पुनर्दूये ।।७।।

(रचनातिथिः १.१.२००० ई०)

# त्वं चन्दनमसि हे प्रभो !

(सन्तरविदासस्य 'प्रभु जी, तुम चन्दन हम पानी 'तिपद्यस्य
'दोहा 'च्छन्दसि संस्कृतकाव्यानुवादः)

त्वं चन्दनमसि हे प्रभो जलमहमस्मि परेश ।
प्रत्यङ्गं तव सुरभिणा सुरभितमिदमखिलेश ॥१॥

त्वमसि नीरदोऽहं प्रभो वनमयूर आभामि ।
अहं चकोरो लालसश्चन्द्रं त्वां पश्यामि ॥२॥

त्वं दीपोऽहं वर्तिका तव तेजसा विभामि ।
त्वं मुक्ताफलमसि विभो सूत्रमहं चाभामि ॥३॥

अहं सुवर्णष्टङ्कणस्त्वं विभासि परमेश ।
त्वं स्वामी मम, चाहमपि दासस्ते दीनेश ॥४॥

रविदासः कुरुते मुदा भक्तिमिमां जगदीश ।
रटति नाम तव निर्मलं नक्तंदिवमयमीश ॥५॥

(इयं रचना १३.२.२००० तारिकायां रात्रौ
दिल्ल्यां प्यारेलालभवने समायोजिते
सन्तरविदास-जयन्ती-बहुभाषा-
कविसम्मेलने पठिता ।)

(रचनातिथिः १३-२-२०००)




# 'तुरीनो' स्मृतिसपादशतकम्

## (एकादशविश्वसंस्कृतसम्मेलनसपादशतकम्)




एकादशविश्वसंस्कृतसम्मेलनावसरे अर्वाचीनसंस्कृतस्य प्रदर्शन्याम्
'चैस्म्यो' संस्थाध्यक्षाय प्रो० आस्करबोत्तोमहाभागाय
अर्वाचीनसंस्कृतस्य नूतनांकं समर्पयन्
रमाकान्त शुक्लः
८.४.२०००

---

अस्या रचनायाः पादटिप्पणीषु प्रदत्ता विदुषां संकेताः प्रायः एकादश-विश्वसंस्कृतसम्मेलनकार्यक्रमपञ्जिकानुसारं सन्ति ।

अस्यां रचानायां संकलितानि चित्राणि रमाकान्त शुक्ल-डा० हरिदत्त शर्म-डा० रमेशकुमार पाण्डेय-'चैस्म्यो' संस्थाभिरंकितानि । चित्रद्वयं वैनिसिया नगरे क्रीतात् चित्रपोस्टकार्डात् साभारं गृहीतम् ।




इटलीदेशस्य 'तुरीनो' नगरे 'हाल ग्वालिनो' इत्यत्र एकादशविश्वसंस्कृतसम्मेलने 'अर्वाचीनसंस्कृतस्य' प्रदर्शनी आयोज्यत । प्रो० आस्कर बोत्तोमहाभागः 'अर्वाचीन-संस्कृत'स्य अंके स्वहस्ताक्षराणि कृत्वा प्रदर्शन्या उद्घाटनं करोति। ( 4.4.2000 )




'अर्वाचीनसंस्कृत'स्य द्वाविंशवर्षीयं प्रथममङ्कं समुन्मील्य सम्पादकाय रमाकान्तशुक्लाय प्रयच्छति प्रो० आर० पी० गोल्डमैन-महाशयः। सह तिष्ठन्ति–प्रो० रामकरण शर्मा, प्रो० राममूर्ति शर्मा प्रो० वि० वेंकटाचलमहाभागश्च। ( 4.4.2000 )



एकादशविश्वसंस्कृतसम्मेलनस्य समापनसत्रे 'हॉल ग्वालिनो'
सभाभवनस्थाः प्रतिनिधयः ( 8.4.2000 )



समापनसत्रानन्तरं 'विला ग्वालिनो' होटल-पृष्ठे समवेताः प्रतिनिधयः ( 8.4.2000 )
पृष्ठभूमौ दूरे हिमाच्छादिता आल्पसपर्वतश्रेणी दृश्यते




एकादशविश्वसंस्कृत-
सम्मेलनस्य प्रतीकचिह्नम्

# 'तुरीनो' स्मृतिसपादशतकम्

(एकादशविश्वसंस्कृतसम्मेलनसपादशतकम्)

वैश्वमेकादशं सांस्कृतं मेलनं
[१]रुद्रसंख्यं 'तुरीनो' नगर्यां शुभम् ।
यत्समायोजितं प्राच्यविद्याधरै-
स्तत्सहस्राब्दमाङ्गल्यदं जायताम् ॥१॥

'आइ०ए०एस०एसे[२]'ति संस्था तथा
'चेस्मियो'[३] संज्ञकं शोधसंस्थानकम् ।
यन्मिलित्वा समायोजितं चक्रतु-
स्तज्जगद्विज्ञसन्तोषदं कल्पताम् ॥२॥

क्रैस्तवर्षे नभोशून्यखाक्ष्यंकिते[४]
एप्रिलाख्ये शुभे मासि षड्भिर्दिनैः ।
[५]शम्भुनेत्रात्मिकायास्तिथेरावसो[६]-
र्योजितं मेलनं को न चित्ते स्मरेत् ॥३॥

खैष्टे वर्षे शून्यखाकाशनेत्रे[७]
एप्रिल्मासेऽथो तृतीये दिनाङ्के ।
'इन्कौण्ट्रा'[८]-संस्थासभागारमध्ये
संसद्भव्याभूत् 'तुरीनो' नगर्याम् ॥४॥

'पो' संज्ञाया यत्र नद्याः प्रवाहे
केचिल्लग्ना नौविहारे युवानः ।
नद्यास्तोयं पक्षिणः संपिबन्तः
सम्मोदं स्वं कूजितैर्व्यञ्जयन्ति ॥५॥

रम्याः स्वच्छा वृक्षपंक्तिप्रसन्नाः
मार्गा दृष्टाश्चत्वरैर्भ्राजमानाः ।
आरामाश्चालोकिता यत्र यूनोः
प्रेमक्रीडा नैव बाधां लभन्ते ॥६॥

तत्रत्यो यो गीतसङ्गीतमार्ग-
स्तत्रालोक्यं कोमलत्वं स्वरेषु ।
उद्वेगं नो यान्ति पौराः स्मितास्याः
कार्कश्यं नो दृश्यते तत्स्वभावे ॥७॥

'आस्कर् बोत्तो'[९] संज्ञको विज्ञधुर्यः
'चैस्म्यो' संस्थाध्यक्षवर्यः सुचेता ।
'इन्कौण्ट्रा'-संस्थासभागारमध्ये
सम्मेलायाः श्रीगणेशं चकार ॥८॥

तेन प्रोक्तं - "संस्कृतज्ञानराशि-
र्धत्ते नूनं सार्वभौमीं प्रतिष्ठाम् ।
चेतःशान्तेः सम्प्रसाराय सर्वै-
राराध्यास्ते सर्वदा देववाणी" ॥९॥

'विला ग्वालिनो'[१०]-संज्ञके रम्यरम्येऽ
तिथीनां गृहे वास आकल्पितो यैः ।
हिमाच्छादितामाल्प्स[११] शृङ्गावलीं ते
समोदं स्वकक्षादपश्यन् बुधेन्द्राः ॥१०॥

'विला ग्वालिनो'-स्वागतास्थानमध्ये
नियुक्ताः प्रसन्नानना या युवत्यः।
विदूरागतेभ्यो बुधेभ्यः समास्ता
ददुः पूर्णसाह्यं, कथं विस्मृताः स्युः ॥११॥

'तुरीनो'नगर्यां समायोजितं विश्व-
गीर्वाणवाण्या यदेकादशं तत्।
सुसम्मेलनं नूतनायाः शताब्द्याः
सहस्राब्दिकायाश्च भद्रं वितन्यात् ॥१२॥

इहागत्य विश्वस्य विद्वद्वरेण्यैः
स्वपत्राणि वैदुष्यवन्त्यर्पितानि ।
समुत्कृष्टपद्यैः समृद्धं च काव्यं
प्रगीतं कवीनां गणैरात्मनीनम् ॥१३॥

'आइ०ए०एस्०एस्०-संस्था-ध्यक्षो वाग्मी तथा सुकविः ।
ग्रन्थानां विविधानां, कर्ता विनयोज्ज्वलः शोधी ॥१४॥

रामकरणशर्माख्यो विबुधो विश्वश्रुतस्तत्र ।
अध्यक्षीयं भाषणमकरोदार्याभिरारभ्य ॥१५॥

तेन प्रोक्तं स्वीयेऽध्यक्षीये भाषणे स्पष्टम् ।
प्रासङ्गिकीयमास्ते संस्कृतभाषाऽधुनापि सर्वेषाम् ॥१६॥

इयमपनयत्यविनयं पर्यावरणं तथा रक्षति ।
सर्वभूतहितनिरतान् जनानियं द्रष्टुमभिलषति ॥१७॥

षड्दिवसीये ह्यस्मिन् व्यवस्थयायोजिते सम्यक्।
सम्मेलने बुधानां विचारसम्मर्शयज्ञोऽभूत् ॥१८॥

केचित्पेठुः पत्राण्यथ केचिद्भाषणं चक्रुः ।
कार्यक्रमञ्च केचिद्दृश्यश्रव्यात्मकं प्रददुः ॥१९॥

चौडनपुरमुक्तेश्वरमन्दिरमभिलक्ष्य फिलियोजा[१२] ।
'सी०डी०रोम'[१३]-प्रस्तुतिमकरोज्ज्ञानाभिवृद्ध्यर्थम् ॥२०॥

महाभारतसम्बद्धं सीडीरोममदर्शयत् ।
प्रश्नैः परिवृतोऽनेकैर्विद्वान् धडफळेभिधः[१४] ॥२१॥

'विला ग्वालिनो'-संज्ञेऽतिथ्यावासे महारम्ये ।
'कोन्वेग्नो'-'पीमोण्टे'-'गुवालिनो' संज्ञ-हॉलेषु'[१५] ॥२२॥

सत्राण्यचलन् षोडश विविधान् विषयान् समालम्ब्य ।
विविधदेशविबुधानामाध्यक्ष्ये षट्सु दिवसेषु॥२३॥



'हालगुआलीनो'इत्यत्रायोजिते प्रथमे सामान्यसत्रे (वामतो दक्षिणं) वैद्यभगवानदाशः, डा० शिवमूर्तिस्वामी, डा० रामकरण शर्मा (अध्यक्षः), डा० रमाकान्तशुक्लः (सञ्चालकः), डा० अलबर्तो चियान्तरेत्तो च

अप्रेलस्य तृतीयेऽह्न्यपराह्णे वादनत्रयतः ।
'हालगुआलीनवि'[१६] वै प्रथमं सामान्यसत्रमभूत् ॥२४॥

संस्कृतभाषाविषये संस्कृतसाहित्यविषये च ।
पत्राण्यपठन् विबुधा आध्यक्ष्ये रामकरणस्य ॥२५॥

सञ्चालकत्वमूरीकृतवान् शुक्लो रमाकान्तः ।
सत्रारम्भे कृतवान् यो वाणी-वन्दनां पद्यैः ॥२६॥



डा० जीन माइकेल डिलायरः शोधपत्रं पठन्

'जीन् माइकेल डिलायर्'[१७] 'गरज़िल्ली एंरिका'[१८] 'पी.के.[१९] ।
हरिमूर्ति[२०] र्देव्रक्यथ[२१] पत्राण्यपठन् मुदा तत्र ॥२७॥

स्वामी[२२] श्रीशिवमूर्तिर्विद्वान् आनन्दगुरुगे[२३]ऽथ ।
नारायणसमतानी[२४] मञ्जुलिकाघोषविदुषी[२५] च ॥२८॥



डा० शशी तिवारी



डा० सुन्दरी सिद्धार्थ



डा० सुरेशचद्रगोस्वामी

शशी तिवारी[२६] वेमेनः[२७] सिद्धार्था सुन्दरी[२८] तथा ।
सुरेशश्चाथ गोस्वामी[२९] पटेलो[३०] गौतमस्तथा ॥२९॥

पत्रपाठे निजान् प्रश्नान् टिप्पणीश्च पृथक्-पृथक्।
अकुर्वन् येन सत्रस्य महिमासीत् सुवर्द्धितः ॥३०॥
'देववाण्याः' प्रसिद्धास्ते दिल्ल्यां हि परिषच्छुभा[३१]।
मुखपत्रं श्रुतं तस्या अस्त्यर्वाचीनसंस्कृतम् ॥३१॥
तस्य पत्रस्य पूर्वेषामङ्कानां सुप्रदर्शनी ।
'ग्वालिनो' संज्ञहॉलस्य प्रवेशद्वारि सज्जिता ॥३२॥






प्रो० आस्कर् बोत्तो प्रदर्शन्या उद्घाटनं विधाय प्रसन्नमुद्रायाम् (४.४.२०००)




प्रो० आर०पी० गोल्डमैन : (सुवर्णपुरुष इतिख्यातः) अर्वाचीनसंस्कृतस्य २२/१ अंकं समुन्मील्य दर्शयति (४.४.२०००)

'आस्कर् बोत्तो'-महाभागस्तस्या उद्घाटनं शुभम् ।
अप्रेलस्य चतुर्थेऽह्नि कृतवान् विबुधोत्तमः ॥३३॥

अस्मिन्नवसरे श्रीमान् 'गोल्डमैन'-बुधोत्तमः[३१] ।
पत्रिका-नूतनाङ्कस्याकरोल्लोकार्पणं मुदा ॥३४॥

स्वहस्ताक्षरितं पत्रं सोऽदान्मह्यं, मयापि च।
हस्ताक्षराणि लब्धानि विदुषां तत्र वर्तिनाम् ॥३५॥




प्रो० वी० वेंकटाचलः श्रीसुन्दरराजकृतं ग्रन्थं समुन्मील्य भाषमाणः (४.४.२०००)

# अर्वाचीनसंस्कृतम्

(अर्वाचीनसंस्कृतपरकं त्रैमासिकं पत्रम्)

द्वाविंशे वर्षे प्रथमोऽङ्कः

१५ जनवरी, २०००

राष्ट्रं जागृयाम

प्रधानसम्पादकः

डा० रमाकान्त शुक्लः

एम० ए०, पीएच० डी०, साहित्याचार्यः

सांख्ययोगाचार्यः



देववाणी-परिषद्, दिल्ली

६, वाणी-विहारः, नयी दिल्ली–११००५९

विद्वद्भिर्हस्ताक्षरितमर्वाचीनसंस्कृतम् (४.४.२०००)

डाक्टर आर० के० शर्मा[33] ऽकरोदध्यक्षतां तदा ।
वेंकटाचल[34] आचार्योऽन्यं ग्रन्थमुदमीलयत् ।।३६।।

श्रीजगन्नाथसम्बद्धं सुप्रभातं तथैव च ।
स्तोत्राण्यन्यानि राजन्ते यस्मिंश्चेतोहराणि वै ।।३७।।

यः श्री० सुन्दरराजेन प्रणीतो ग्रन्थ[35] उत्तमः।
पूर्वं प्रकाशितः पत्रेऽनन्तरं पुस्तकाकृतौ ।।३८।।

इयं प्रदर्शनी पञ्च दिवसाँस्तत्र संस्थिता ।
अप्रेलस्याष्टमेऽह्नीयम् उपसंहारमागता ।।३९।।

तस्मिन्नवसरे श्रीमान् आस्कर् बोत्तोमहाशयः ।
स्वीकृत्य पत्रनूत्नाङ्कं हस्तं मेलितवान् मया[36] ।।४०।।

स्वच्छे 'हॉल गुआलीनो'-महाकक्षे दिनद्वयम् ।
कविसम्मेलनं जातं हर्षदातृ सचेतसाम् ।।४१।।



विश्वसंस्कृतकविसम्मेलनेऽध्यक्षमण्डलस्य सदस्याः (वामतो दक्षिणं) प्रो० राममूर्तिशर्मा, प्रो० रामकरणशर्मा (कवितां पठन्), प्रो०वी० वेंकटाचलः, सञ्चालको डा० रमाकान्तशुक्लश्च.

रामकरणशर्माणः[३७] किञ्च श्रीवेंकटाचलास्तत्र।
श्रीराममूर्तिसहिता अध्यक्षपदं ह्यलञ्चक्रुः ॥४२॥

चतुर्थ-सप्तमदिनयोरप्रेलस्योक्तप्रेक्षणागारे ।
अहमासं सयोजक इतरे कवयोऽभवँश्च सहभाजः॥४३॥



प्रो० ओम्प्रकाश पाण्डेयः



प्रो० हरिदत्त शर्मा

तत्र श्रीहरिदत्तो[३८] नैंकाकेऽभ्यागताचार्यः ।
पाण्डेयौम्प्रकाशः[३९] पेरिसपुर्याश्च सम्प्राप्तः ॥४४॥

कौशल्या वल्ली[४०] च, जम्मूनगरात्समायाता ।
भुवनेश्वरनगराच्छ्रीप्रफुल्लमिश्रस्तथा[४१] प्राप्तः ॥४५॥

दुर्गभिलाईवासी महेश शर्मा[४२] महोत्साहः ।
भुवनेश्वरवास्तव्यो गोपीनाथो महापात्रः[४३] ॥४६॥



प्रो० अशोकः अक्लूजकरः



प्रो० महेशचन्द्र शर्मा

अक्लूजकरोऽशोकः[४४] कैनेडादेशतः प्राप्तः।
उज्जयिनीकविपरिवृढ आचार्यः श्रीनिवासरथः[४५] ॥४७॥

मौहम्मद इसराइल खान:[४६] पाण्डेय आर्एस:[४७] ।
कर्णावतीनिवासी श्रीमान् गौतमपटेलश्च[४८] ॥४८॥



विश्वसंस्कृतकविसम्मेलने कवितां पठन् डा० रमेशकुमार पाण्डेयः (४.४.२०००)

दिल्लीतः सम्प्राप्तः पाण्डेयाचार्य आर०के०[४९]युवकः ।
'शोधप्रभा' प्रकाशन-सम्पादनकार्यसंलग्नः ॥४९॥



भारती देवी (न्यूयार्क)

न्यूयार्कात्सम्प्राप्ता योगज्ञा भारती[५०] देवी ।
शर्मा श्रीरामकरण आचार्योराममूर्तिश्च ॥५०॥

वी० वेंकटाचलाख्यो दार्शनिकः कविरथाचार्यः।
सिद्धार्थसुन्दरी च कवितापाठं मुदा चक्रुः ॥५१॥



विश्वसंस्कृतकविसम्मेलने कवितां पठन् (दक्षिणे) रमाकान्त शुक्लः (४.४.२०००)

मया 'भाति मे भारत'[५१] मिति काव्यात्त्रीणि पद्यानि ।
'उत्तरमङ्गल'[५२] नाम्नी रचना चैवांशतः पठिता ॥५२॥

प्रथमं कविसम्मेलन - सत्रं यस्मिन् दिने पूर्णम् ।
तस्मिन् दिवसेऽजायत वैक्रमनवरात्रप्रारम्भः ॥५३॥

विजयनाम-संवत्सर-प्रवृत्तिमभिलक्ष्य कविवर्यैः ।
शुभकामनाः प्रदत्ताः सर्वेभ्यः पूतभावेन ॥५४॥

अप्रैलगिरिसंख्येऽह्नि (७.४.२०००) काव्यपाठोपवेशने ।
जोशी किरीट[५३] आसीद्वै विशिष्टातिथिमानभाक् ॥५५॥



विश्वसंस्कृतकविसम्मेलनस्य द्वितीयोपवेशने (वामतो दक्षिणं) डा० किरीट जोशी (मुख्यातिथिः) प्रो० रामकरण शर्मा (अध्यक्षः) प्रो० श्रीनिवास रथः (कवितां पठन्) रमाकान्त शुक्लश्च (सञ्चालकः) (७.४.२०००)

श्रीनिवासरथश्चासीत् प्रमुखः काव्यपाठकः ।
'तदेव गगनं'[५४] सिद्धो यस्यास्ते काव्यसंग्रहः ॥५६॥

अशोकाक्लूजकरनामा कनाडादेशतः प्राप्तः ।
युवककविद्याव्रती कविताम् पपाठ क्रोडसंगणकात्[५५] ॥५७॥

अध्यक्षासन्दिका जुष्टा श्रीमद्भिर्धैर्यशालिभिः ।
करणोत्तररामैश्च शर्मभिः[५६] कवितल्लजैः ॥५८॥

यद्यपि कविसम्मेलनमासीन्नो कार्यसूचिस्थम्।
आयोजितं तथापि त्वरितेन प्रावधानेन ॥५९॥

श्रीरामकरणशर्मा, विक्टर ओगस्तिनी[५७] तथा चान्ये ।
ऑस्करबोत्तोप्रभृतय आसन् साहाय्यकर्तारः ॥६०॥

संयोजनसञ्चालनकर्मणि शुक्लो रमाकान्तः ।
नियोजितोऽयं सकलैः कविवाणीवन्दितां यातः ॥६१॥

दिनद्वये मध्यान्तरवेलायां योजिते ह्यस्मिन्।
अष्टादश किल रचनाः पठिताः कविभिर्मुदोत्फुल्लैः ॥६२॥

आयत्यामपि भूयात्कविगोष्ठी पूर्वसूचनया ।
एष प्रस्तावोऽभूत् कार्यसमित्यां तुरीनोपुरि ॥६३॥

अप्रेलपञ्चमेऽह्नि[५८] द्रष्टुं नगरं वयं याताः ।
चर्च-चतुष्पथ-संग्रहगेह-विपणिकाः समैर्दृष्टाः ॥६४॥

तस्मिन्नेव दिनाङ्केऽभूदर्पितं मानपुस्तकम्[५९] ।
ग्रेगरी एम० बोन्गार्डलेविनाय[६०] महात्मने ॥६५॥

'इण्डोलोजिका तौरीनेन्सिया'[६१] नाम विश्रुतम् ।
'आइ. ए.एस्.एस्.' संस्थायाः मुखपत्रं विराजते ।।६६।।

त्रयोविंश-चतुर्विंश-संख्याकौ तस्य नूतनौ ।
संयुक्ताङ्कौ प्रसिद्धौ यौ तौ जातौ मानपुस्तकम् ।।६७।।





( उपरि ) वेनीसियानगरे सेण्टरस्क्वेयर जलमार्गतटे ( वामतो दक्षिणं ) डा० रामसुरेश-पाण्डेयः, रमाकान्त शुक्लः, प्रो० ओम्प्रकाश पाण्डेयः, डा० सुरेशचन्द्र गोस्वामी च। ( नीचैः ) सेण्टमार्कस्क्वेयरे उपर्युक्ता अन्ये च सहयात्रिणः।

अप्रेल-षष्ठदिवसे दृष्टा वेनीसिया नगरी ।
पाण्डेयद्वय-शुक्ल-त्रिपाठि-गोस्वामिभिर्गत्वा[६२] ।।६८।।

'वेनिस' इति या चांग्लैरुच्चार्या, सा पुरी रम्या ।

केवलजलपरिवहनं, तत्रास्ते साधनं गतागतयोः ॥६९॥





(उपरि) सेण्ट मार्क स्क्वेयरप्रांगणं (नीचैः) बासिलिक चर्च च ।
(साभारम्)

'सेन्मार्क स्क्वायरं'[६३] दृष्टं, चर्च बासिलिकं[६४] तथा ।
विस्रब्धानां कपोतानां क्रीडा दृष्टा मनोहरा ॥७०॥



'सेण्ट मार्क स्क्वेयरे'.कपोतानां क्रीडां पश्यन्तः रमाकान्त शुक्लः,
डा० रामसुरेश पाण्डेयः, डा० ओम्प्रकाशपाण्डेयदम्पती च।

तेभ्यः कणा मया दत्ता वेष्टितस्तैरहं मुदा ।
केचिच्छिरसि सम्प्राप्ताः केचित्स्कन्धे परे करे ॥७१॥

सुरेशचन्द्रगोस्वामी दिल्लीवासी तदा मम ।
छव्यङ्कनं विधायादात् मह्यं चित्रमनन्तरम् ॥७२॥

बालकाः बालिकास्तत्र किशोराश्च किशोरिकाः ।
युवानोऽथ युवत्यश्च प्रौढ-वृद्धा विलोकिताः ॥७३॥

सर्वे सर्वाश्च गौरेण वर्णेन श्रियमागताः ।
श्यामैर्नेत्रैस्तथा केशैः शोभिता हृदयस्पृशः ॥७४॥

भोजनाभूषणादीनां यास्तत्रापणिकाः स्थिताः ।
आगन्तुकानां पुटकात् बलाल्लीराः[६५] हरन्ति ताः ॥७५॥

निवृत्य रेलयानेन तस्मिन्नेव दिने वयम् ।
तुरीनोनगरं प्राप्ता निशीथे शीतभाविते ॥७६॥

सप्तम्यामाप्रेल्यां 'गुआलिनो' संज्ञके सभाभवने ।
ब्रोकिंग्टन्नाध्यक्ष्ये[६६] मयापि पठितं स्वकं पत्रम्[६७] ॥७७॥

श्रीमद्भागवतस्था नववर्णीयैर्युताः पादैः ।
अनुष्टुभो हि विमृष्टा सोदाहरणं मया तत्र ॥७८॥

रामकरणशर्मान्ये विद्वांसश्चात्र पत्रे स्वान् ।
सट्टिप्पणीरकुर्वन् पप्रच्छुर्मां तथा प्रश्नान् ॥७९॥

एषु बुधेषु श्रीमानक्लूजकरस्तथा च पाण्डेयः ।
रामसुरेशो गोपीनाथमहापात्र इति मुख्याः[६८] ॥८०॥

अष्टमेऽथ दिनाङ्केऽभूत्पूर्तिसत्रं[६९] सुयोजितम् ।
महाकक्षे 'गुआलीनो हॉल'-संज्ञे मनोरमे ॥८१॥

'हॉल गुआलीनो-' भूर्धन्यास्ते यत्र सफलं सत् ।
एकादशं हि वैश्वं संस्कृत-सम्मेलनं पूर्णम् ॥८२॥

मयार्वाचीनसंस्कृतपत्र-पूर्वाङ्का यथालब्धाः ।
समार्प्यन्ताशुकरभट्टाय[७०] विदुषे सादरं तत्र ॥८३॥

समापनसत्रकाले राममूर्तिः कुलपतिस्तस्मै ।
ददौ सम्मानपत्रं विश्व-विद्यागेहपक्षाद्वै[७१] ॥८४॥

पठितवान् सादरं सम्मानपत्रं तत्र हरिदत्तः ।
प्रयागस्थस्तथाद्यत्वेऽतिथिर्बैंकाक आचार्यः ॥८५॥

ततः सामूहिकं छव्यङ्कनं समवेतविबुधानाम् ।
'गुआलीनो विला' पृष्ठेऽभवत् सूर्यातपालोके ॥८६॥

तदाल्पसपर्वतश्रेणी हिमाच्छन्ना बभौ नूनम् ।
सरस्वत्याः शुभं हासं सृजन्ती विद्वदालोके ॥८७॥



तुरीनोनगर भ्रमणकाले 'बारबरा' युवत्या ( मध्यस्थया ) साकं सम्मेलनप्रतिनिधयः

ततः परं 'बारबरा'[७२] युवत्या
प्रदर्शिता नो नगरस्य शोभा ।
उद्यान-दुर्गादिविलोकनेन[७३]
हृष्टा वयं प्रेमरसाभिभूताः ॥८८॥

ततः परेद्युर्नवमे दिनाङ्के
गता समस्तातिथयः स्वदेशम् ।
निधाय चेतस्सु मधुस्मृतिं वै
सम्मेलनस्यास्य मनोहरस्य ॥८९॥

एवञ्चेतालियादेशे[७४] 'तुरीनो' नगरे मुदा ।
विश्वं संस्कृतमाहात्म्यादेकनीडमिवाभवत् ॥९०॥

द्विशताधिककविद्वांसः समवेता मेलने ह्यस्मिन् ।
येषां नामग्रहणे स्थानं किल बह्वपेक्ष्येत ॥९१॥

ओगस्तीनी विक्टरस्तत्परः सन्
साचिव्यं श्री आस्करस्याकरोद्यः ।
प्रादादस्मभ्यं समस्तं हि साह्यं
तस्याभारं मानसे धारयामः ॥९२॥

'विला गुआलिनो' स्थानात् अप्रेलनवमे दिने ।
'तुरीनो' व्योमयानानां पत्तन[७५] वयमागताः ॥९३॥

अस्मान् नीत्वा समायाता शिष्टा या किल सुन्दरी ।
'लौरिदाना' मिधा, तस्यै धन्यवादान् ददाम्यहम् ॥९४॥

सा प्रसन्नानना तन्वी कर्तव्यकुशला तथा ।
सखीभिः सहिता साह्यमस्मभ्यं सततं ददौ ॥९५॥

तस्यै तस्याः सखिभ्यश्चाशीर्वादान् वितराम्यहम् ।
यत्र यत्र वसेयुस्ताः सर्वसौख्यमवाप्नुयुः ॥९६॥

'एमेनुएला' नवयौवनश्रीः
स्वकार्यदक्षा ह्यथ 'लौरिदाना'।
साहाय्यकर्त्री किल 'पावला' च
विस्मर्तुमेता न कदापि शक्याः[७६]॥९७॥

अस्मत्कक्षस्वच्छतापादयित्री
या शालीना सुन्दरी रम्यरूपा ।
हस्ते 'मोबाईल-फोनं' दधाना
साऽपि स्मर्यागन्तुकैर्नूनमास्ते ॥९८॥

'एयरफ्रांस' संज्ञेन विमानेन वयं तदा ।
'चार्ल्स डी गॉल' संज्ञं वै प्राप्ताः पेरिसपत्तनम् ॥९९॥



पेरिसनगर्याम् ईफिलटावर-स्तम्भः

'ईफिल टावर'नामा प्रथितो ह्यभ्रंल्लिहः स्तम्भः।
युगलकिशोरेण[७७] तथा शशिना[७८] साकं मया दृष्टः॥१००॥

दृष्टा स्वतन्त्रतायाः प्रतिमा विश्वश्रुताऽस्माभिः ।
'सेन' नदीतीरस्था, न्यूयार्केऽप्यस्ति तादृशी मूर्तिः॥१०१॥



'ईफिल टावरं' निकषा (वामतो दक्षिणं) डा० युगलकिशोर मिश्रः रमाकान्त शुक्लः, डा० शशि तिवारी च।

'ईफिल टावर'-पार्के सामूहिकचित्रमभवन्नः ।
'नौएडा'-गुप्तकृत[७९] नूनमसौ धन्यवादार्हः॥१०२॥

आंग्लीं भाषां पेरिसवासी नो वदति कश्चिदपि ।
अनुमानेनैव वयं तेषां फ्रेंचं तु जानीमः ॥१०३॥

अस्माकं सारथिरपि फ्रेंचं वदति स्म नो आंग्लीम् ।
किन्त्विङ्गितैः समस्तं कार्यमभूत्सिद्धमस्माकम् ॥१०४॥

'एयरइण्डियायान'मारुह्याथ विलम्बतः ।
दिल्लीं प्राप्तः समित्रोऽहमप्रेलदशमे दिने ॥१०५॥

'मातास्माकं धरणी सर्वत्रैवाश्रयोऽस्माकम् ।
तस्याः स्वास्थ्यं नष्टं वयं कुपुत्राश्चिकीर्षामः ॥१०६॥

भ्रष्टाचार-कुपोषण-पर्यावरणप्रदूषणप्रभृति ।
कृत्वा वयं कुकार्यं मातुः क्लेशं सदा कुर्मः ॥१०७॥

मा कश्चिदपि धरित्र्याः क्लेशं वर्धिष्णुरस्तु कुत्रापि ।'
इत्यनया भावनया दिल्लीभूमिं ववन्देऽहम् ॥१०८॥

तस्मिन्नेव दिने(१०.४.२०००)मम पौत्र्याः[८०] प्रथमं तु जन्मदिनमासीत् ।
निजपित्रा साकं साप्यानेतुं मां समायाता ॥१०९॥

पुत्रान् पौत्रीं जायां दृष्ट्वा हर्षं जगामाहम् ।
पाण्डेयैः[८१] सहितोऽहं 'रमालयं'[८२] प्राप्तवान् सपदि॥११०॥

स्मारं स्मारमिदं किल सम्मेलनमस्म्यहं सुखितः ।
स्मरणीयमिदं स्थास्यति मन्येऽन्येषां बुधानामपि ॥१११॥

नगरभ्रमणं भोजनमावासः पत्रपरिपठनम् ।
वार्तालापश्चर्चा सर्वं सिद्धं 'तुरीनो'पुरि ॥११२॥

पूर्णं विवरणमास्ते दातुमशक्यं मयैकेन ।
यतो हि नोपातिष्ठम् सर्वेष्वपि सत्रकक्षेषु ॥११३॥

विद्वांसः प्रार्थ्यन्ते वैशद्याल्लेखितुं तत्तत् ।
सम्मेलनस्य वृत्तं साक्षाद्विहितं हि तैर्यद्यत् ॥११४॥

भारद्वाजोपाह्वा कमला[८३] विदुषी लिलेख गद्येन ।
सम्मेलनस्य वृत्तं प्रकाशितं भवति तच्चात्र ॥११५॥

शशी तिवारी पाण्डेय आर. के. संज्ञकस्तथा ।
दृष्टं श्रुतं समाश्रित्य वृत्तं गद्ये लिलेखतुः ॥११६॥

यात्रायै 'यू०जी०सी०'[८४] प्रतिशुश्रावानुदानं मे ।
आयोगस्य तदर्थं वहामि कार्तज्ञमाभारी ॥११७॥

ये ये जना याश्च युवत्य आसन्
व्यस्ता प्रबन्धे खलु मेलनस्य ।
तेषाञ्च तासाञ्च भवन्तु लोके
मनोरथा लब्धफलाः सदैव ॥११८॥

सर्वे भवन्तु सुखिनः सर्वे स्वस्थास्तथा सन्तु ।
सर्वे संस्कृतरुचयः सर्वे किल पूर्णकामाः स्युः ॥११९॥

द्वादशं मेलनं वैश्वं हेलसिंक्यां हि सांस्कृतम् ।
त्रिवर्षानन्तरं भूयादेवमेव शुचिस्मृति ॥१२०॥

वैक्रमेऽद्रिशराकाशनेत्रे[८५] विजयवत्सरे ।
चैत्रे मासि सिते पक्षे नवम्यां बुधवासरे ॥१२१॥

* अर्वाचीनसंस्कृते

क्रैस्तविंशशताब्द्याश्च सहस्राब्द्यास्तथान्तिमे[८६]।

द्विसहस्रतमे वर्षेऽप्रेलस्य द्वादशे दिने ॥१२२॥

'रमालये' रमाकान्तः निवसन् रमया सह।
सपादशतकं चक्रे 'तुरीनोस्मृति'संज्ञकम् ॥१२३॥

नास्ते वर्णनविच्छित्तिर्नैवाप्यत्रास्त्यलंकृतिः ।
किन्तु साक्षात्कृतं वस्तु स्मरणीयमिहास्ति नः ॥१२४॥

इदं विवरणं सत्यमत्युक्तिरहितं शिवम्।
पद्यरूपस्थितं भूयात् तोषार्थं संस्कृतात्मनाम्॥१२५॥

(रचनातिथिः रामनवमी वि० २०५७, बुधवासरः १२.४.२००० ई०)



(वामतो दक्षिणं) वैद्यभगवानदाशः, प्रो० रामकरण शर्मा, प्रो० ऑस्कर बोत्तो, रमाकान्त शुक्लश्च (३.४.२०००)

## पादटिप्पण्यः

१. एकादशम्।

२. 'इण्टरनेशनल एसोसिएशन ऑफ़ संस्कृत स्टडीज' (International Association of Sanskrit Studies, Paris) इत्येतन्नाम्नी संस्था यस्या मुख्यालयः पेरिसनगरेऽस्ति।

३. CESMEO इण्टरनेशनल इन्स्टीट्यूट फॉर एडवांस्ड एशियन स्टडीज तुरीनो (इटली) (International Institute for Advanced Asian Studies, Turin, Italy)

४. २००० तम क्रैस्तेऽब्दे।

५. तृतीयदिवसात् (३.४.२०००)

६. अष्टमदिनं यावत् (८.४.२०००)

७. २००० तमे।

८. CENTRO CONGRESSI TORINO INCONTRA, via Nino Costa 8, Turin (Italy).

९. Prof. Oscar Botto, President CESMEO, International Institute for Advanced Asian Studies, Turin, (Italy).

१०. Hotel—Villa Gualino, Viale Settimio Severo 63, 10133 TORINO (Turin) Italy.

११. आल्पस पर्वत-शिखरावलीम्।

१२. Prof. Pierre-Sylvain Filliozat, Ecole Pratique des Hautes Etudes, Paris (France).
Dr. Vasundhara Filliozat, Institute de Civilisation Indienne, Paris (France).

१३. CD-ROM अस्य प्रदर्शनं कम्प्यूटरयन्त्रेण चित्रपटे क्रियते यत्र दृश्यं श्रव्यं चोभयमपि साक्षात्क्रियते प्रेक्षकैः। मध्ये मध्ये प्रस्तोता व्याख्यामपि करोति।

१४. Dhadphale Prof. M. G., Hon. Secretary B. O. R. I., Pune (India)

१५. Hall Gualino, Hall Convegno, Hall Piemonte—इत्येतेषु सभागारेषु।

१६. 'Hall Gualino' इत्यत्र । 'गुआलीनो' इति प्रातिपदिकस्य सप्तम्यन्तं रूपम्।

१७. Delire Dr. Jean Michel, Universite' Libre de Bruxelles Bruxelles (Belgium).

१८. Garzilli, Prof. Enrica, Instituto di Linguistica, Universite' degli Studi di Perugia, Perugia (Italy).

१९. Misra Dr. Prafulla Kumar, Post Graduate Dept. of Sanskrit, Utkal University, Bhubaneswar (India).

२०. Kridalaksana, Prof. Harimurti, University of Indonesia, Jakarta (Indonesia).

२१. Devaki, Dr. H. P., Dept. of Studies in Sanskrit, University of Mysore, Mysore (India).

२२. Swamiji Prof. Shivamurthy, S. T. J. Education Society, Bangalore (India).

२३. Guruge Prof. Ananda W. P., Senior Special Advisor to the Director General of UNESCO, Dean of Academic Affairs and Director of the International Academy of Buddhism, Hsi Lai University, Los Angeles (CA, USA).

२४. Samtani Prof. Narayan H., Hon. Director of the Centre for Mahayana Buddhist Studies, Nagarjuna University, Guntur (India).

२५. Ghosh Dr. Manjulika, Dept. of Philosophy, University of North Bengal, Darjeeling (India).

२६. Tiwari Dr. Shashi, Reader in Sanskrit, Maitreyi College, University of Delhi, New Delhi (India).

२७. Wayman Prof. Alexander, Professor Emeritus of Sanskrit,

Colambia University, New York (U.S.A.).

२८. Siddhartha, Dr. Sundari, Indraprastha College, Delhi (India).

२९. Goswami, Dr. Suresh C., Dept. of Chemistry, Dyal Singh College, University of Delhi, New Delhi (India).

३०. Patel Dr. Gautam, Chairman, Sanskrit Sahitya Akademi, Gujrat State, Ahmedabad (India).

३१. देववाणी-परिषद्, दिल्ली Devavani Parishad, Delhi, R-6, Vani Vihar, New Delhi-110059.

३२. Goldman Prof. Robert P., Dept.of South and Southeast Asian Studies, University of California at Barkeley (CA, USA).

३३. Sharma Prof. Ram Karan, President I.A.S.S., Delhi (India).

३४. Venkatachalam Prof. V., Chairman, Indian Council of Philosophical Research, Govt. of India, Varanasi (India).

३५. श्रीजगन्नाथसुप्रभातम् तथा अन्यानि स्तोत्राणि Shri Jagannatha Suprabhatam and Other Stotras (with English Commemtary) by S. Sundararajan, I.A.S. (Rtd.) Devavani Parishad Delhi, R-6 Vani Vihar, New Delhi-110059 (India), 1998.

३६. अर्वाचीनसंस्कृतस्य सम्पादकेन रमाकान्तशुक्लेन सह।

३७. एकस्यैव जनस्य कृते कविसम्मेलनस्य समाप्तिं यावदुपवेशनं कठिनं भवतीति हेतोः संस्कृतकविसम्मेलनस्य आयोजनकाले मया प्राय एकाधिकानां विदुषामध्यक्षमण्डलं निर्मीयते येन एकस्य सदस्य-स्यानुपस्थितावपि सम्मेलनमध्यक्षविरहितं न स्यात्। श्रीराममूर्तिः=Sharma Prof. Ram Murti, Vice Chancellor, Sampurnanand Sanskrit University, Varanasi (India).

३८. Sharma Dr. Hari Dutt, Visiting Professor of Sanskrit, Dept. of Oriental Languages, Silpakorn University, Bangkok (Thailand).

३९. Pandey Prof. Om Prakash, ICCR Visiting Professor of Sanskrit, Oriental Dept., Sorbonne, Paris (France).

४०. Walli Dr. Koshalya, Former Head of the Sanskrit Dept., Jammu University, Jammu Tawi (India).

४१. द्र० पादटिप्पणी १९.

४२. Sharma Prof. Mahesh Chandra, Bhilai (India).

४३. Mahapatra Prof. Gopinath, Head of the Dept. of Sanskrit, Utkal University, Bhubaneswar (India).

४४. Aklujkar Prof. Ashok N., Dept. of Asian Studies, British Columbia University, Vancouver (Canada).

४५. Rath Prof. Shrinivas, Formar HOD Sanskrit, Vikram University, Ujjain, M.P. (India), 18 Kalidasa Marg, Ujjain 456010 (India).

४६. Khan Prof. M. I., Sanskrit Dept., University of Delhi, South Campus, New Delhi (India).

४७. Pandey Dr. Ram Suresh, Reader in Sanskrit Dept., Rajdhani College, New Delhi-110015 (India)

४८. द्र० पादटिप्पणी ३० ।

४९. Pandey Prof. Ramesh Kumar, Shri Lal Bahadur Shastri Rashtriya Sanskrit Vidyapeeth, New Delhi (India).

५०. Bharati Devi, Anand Ashram, New York (U.S.A.).

५१. 'भाति मे भारतम्' इत्येतच्छीर्षकं काव्यं यस्य प्रथमं संस्करणं १९८० तमे चतुर्थं च संस्करणं १९९९ तमे ख्रैष्टेऽब्दे प्रकाशितं जातम्।

५२. 'उत्तरमङ्गलम्' इत्येतच्छीर्षकं ४७ स्त्रग्विणीयुतं काव्यं यद्धि कस्यचिन्मित्रस्य नववर्षशुभकामनाया उत्तरस्वरूपमस्ति मित्रस्य मङ्गलं च कांक्षति।

५३. Joshi, Kirit, Former Secretary, Ministry of Education, Govt. of India, New Delhi.

५४. द्र० पादटिप्पणी ४४

५५. 'लेप टॉप'-नाम कम्प्यूटरयन्त्रात्।

५६. प्रो० रामकरणशर्मभिः । द्र० पादटिप्पणी ३३

५७. Victor Agostini, Confrence Secretary.

५८. ५.४.२००० तारिकायाम्। तस्मिन् दिने स्क्वेयर-प्रसिद्ध चर्चगर्भगृहदर्शनानन्तरं 'Via Po 55, Torino' इत्यत्र स्थितः 'Museo Di Arti Decorative' -संज्ञकः संग्रहालयो दृष्टः। तदनन्तरं 'ड्राइव तौरीनी' प्रभृति मार्गा अपि दृष्टाः।

५९. Felicitation Volume.

६०. Bongard—Levin Prof. Gregory, Russian Academy of Sciences, Moscow (Russia).

६१. Indologica Taurinensia (Official Organ of the International Association of Sanskrit Studies), Volume XXIII-XXIV 1997-98, Editor in Chief : Oscar Botto. Published by CESMEO, Via Cavour, 17-10123 TORINO (Italy).

६२. 'पाण्डेयद्वय' इति पदेन सपत्नीकः डा० ओम्प्रकाशपाण्डेयः डा० रामसुरेशपाण्डेयश्च निर्दिष्टौ, द्र० टिप्पणी ३९, ४७ । 'शुक्ल'पदेन रचनाकारो रमाकान्तशुक्लो निर्दिष्टः । त्रिपाठिपदेन डा० आशारानी त्रिपाठी गृह्यते—Tripathi Asha Rani, Head of the Dept. of Sanskrit, Sankardev College, Shilong (India). 'गोस्वामि'पदेन २९ टिप्पण्यंकितः डा० सुरेशचन्द्रगोस्वामी सपत्नीको गृह्यते ।

६३. St. Marcus Square.

६४. Bacilik of St. Marcus.

६५. इटलीदेशस्य 'लीरा' (Lira) संज्ञकमुद्राः ।

६६. Brockington Prof. John L., School of Asian Studies, University of Edinburgh, Edinburgh (U.K.)

६७. *'Anuṣṭubh in Śrīmad Bhāgavata Mahāpurāṇa'* इतिशीर्षकं शोधपत्रम् ।

६८. एतेषां विदुषां परिचयार्थ–३३, ४३, ४४, ४७ संख्याकाः टिप्पण्यो द्रष्टव्याः।

